प्रकाशकः

**नेपालसर्वकारः**

**शिक्षाविज्ञानप्रविधिमन्त्रालयः**

**पाठ्यक्रमविकासकेन्द्रम्**

**सानोठिमी–भक्तपुरम्**



प्रथमसंस्करणम् - २०८०

# अस्मदीयं कथनम्

विद्यालयस्तरीयशिक्षामुद्देश्यप्रधानां व्यावहारिकीं सामयिकीं वृत्तिदायिनीं च विधातुं समये समये पाठ्यक्रम-पाठ्यपुस्तकविकास-परिमार्जनानुकूलनकार्याणि निरन्तरं सञ्चाल्यमानानि सन्ति । विद्यार्थिषु राष्ट्रराष्ट्रियते प्रति सम्मानभावनामुद्भाव्य नैतिकानुशासन-स्वावलम्बनादि-सामाजिक-चारित्रिक-गुणानामाधारभूत-भाषिकशिल्पस्य विकासपूर्वकं सहयोगात्मकस्य दायित्वपूर्णस्य चाऽऽचरणस्य विकासोऽद्यत्वे आवश्यको दृश्यते । अस्या एवावश्यकतायाः परिपूर्तये शिक्षासम्बद्धैर्महानुभावैः सम्मिलितानां गोष्ठीनामन्तःक्रियायाश्च निष्कर्षेण निर्मितं २०७८ तमस्य वैक्रमाब्दस्य पाठ्यक्रममनुसृत्य पुस्तकमिदं निर्मितं वर्तते । शिक्षा विद्यार्थिषु वर्तमानस्य ज्ञानपक्षस्यान्वेषणं विधाय शिक्षणशिल्पेन जीवनस्य सम्बन्धं स्थापयति । शिक्षया विद्यार्थिषु स्वाधिकारस्य, स्वतन्त्रतायाः, समानतायाश्च प्रवर्धनाय, स्वस्थजीवनस्याभ्यासाय, तार्किकविश्लेषणेन निर्णयाय, वैज्ञानिकविश्लेषणेन व्यक्ति-समाज-राष्ट्राणां सबलविकासाय चाग्रेसरणशीलं सामर्थ्यं विकसनीयम् । एवं व्यक्तेः नैतिकाचरणप्रदर्शनाय, सामाजिकसद्भावप्रवर्धनाय, पर्यावरणस्य समुचितप्रयोगशिक्षणाय, दृढशान्तौ प्रतिबद्धतायै च शिक्षायाः आवश्यकता समाजे अवलोक्यते । तेन समाजसापेक्षतया ज्ञान-शिल्प-सूचना-सञ्चार-प्रविधीनां प्रयोगसमर्थाः, स्वावलम्बिनः, व्यावसायिकशिल्पाभ्यासनिरताः, राष्ट्रं राष्ट्रियतां राष्ट्रियादर्शं च प्रति सम्मानविधायकाः, समाज-स्वीकार्याः, सदाचरणशीलाः, स्वसंस्कृति-संस्कारपालनपराः, परसंस्कृत्यादिषु सहिष्णवश्च नागरिकाः शिक्षया निर्मातव्याः । एवं कल्पनाशीलानां रचनाशिल्पिनाम्, नैरन्तरिकपरिश्रमेणोद्यमशीलानाम्, विचारे उदात्तानाम्, व्यवहारे आदर्शमयानाम्, सामयिकसमस्यानां व्यवस्थापने साफल्याधायकानाम्, स्वावलम्बिनाम्, देशभक्तानाम्, परिवर्तनोद्यतानाम्, चिन्तनशीलानाम्, समावेशिसमाजनिर्माणे योगदानं करिष्यमाणानां च नागरिकाणां निर्माणं शिक्षया विधातव्यमिति समाजस्यापेक्षा दृश्यते । इमानेव पक्षान् विचार्य 'राष्ट्रिय-पाठ्यक्रम-प्रारूप, २०७६' इत्यनुसारेण निर्मितस्य कर्मकाण्डविषयकपाठ्यक्रमस्याधारेण अष्टम्याः कक्षायाः पाठ्यपुस्तकमिदं विकसितं वर्तते ।

सर्वप्रथमं डा. ऋषिराम-पोखरेलः, केशवः अधिकारी, शम्भुप्रसाद-दाहालः, हरि-गौतमप्रभृतीनां महानुभावानां कार्यदलेन लिखितमिदं पुस्तकं मनोजः घिमिरे, शिवप्रसादः लामिछाने, केशवप्रसादः भट्टराई, पुरुषोत्तमः घिमिरे- प्रभृतीनां महानुभावानां कार्यदलेन परिमार्जितं सम्पादितञ्चास्ति । अस्य पाठ्यपुस्तकस्य विकासे पाठ्यक्रमसिद्धान्तसंरचनयोः नवीनतमधारणामनुसृत्य

परम्परागतानां शिल्पानामनुसरणं कृतमस्ति । अस्मिन् कार्ये अस्य केन्द्रस्य महानिर्देशकः वैकुण्ठप्रसादः अर्याल, प्रा.डा. माधवशरणः उपाध्याय, प्रा.डा. आनन्दप्रसादः घिमिरे, प्रा.डा. ऋषिरामः पौडेल, निश्चलः अधिकारी, टुकराजः अधिकारी-प्रभृतीनां महानुभावानां विशेषसहयोगो विद्यते । अस्य रूपसज्जा भक्तबहादुरः कार्की इत्याख्येन महानुभावेन कृतमस्ति ।

पाठ्यपुस्तकं शिक्षणप्रक्रियाया महत्त्वपूर्णसाधनं भवतीति नाविदितं शेमुषीमताम् । सानुभवाः शिक्षकाः, जिज्ञासवश्छात्राः, सविधिकर्मकराश्च पाठ्यक्रमलक्ष्यीकृतान् विषयान् नैकविधस्रोतसां साधनानाञ्चोपभोगेन अध्यापयितुमध्येतुं कर्म कर्तुं च प्रभवन्ति । अनेकैः कारणैः सर्वेष्वेव विद्यालयेषु सरलतया पाठ्योपकरणानामुपलब्धेरभावाद् अध्ययनकार्यं केवलं पाठ्यपुस्तकाश्रितं भवतीति तथ्यमात्मसात्कृत्य प्रस्तुतमिदं पाठ्यपुस्तकं यथासम्भवं स्तरयुतं विधातुं प्रयासो विहितः, तथापि पाठ्यपुस्तकेऽस्मिन् यत्र यत्र त्रुटयोऽल्पताश्च विदुषां दृष्टिपथमागच्छेयुस्तत्र तत्र परिष्कारे परिवर्धने च दृग्गोचरीभूतानां त्रुटीनां परिमार्जनादिकार्यजाताय परामर्शप्रदानविधौ शिक्षकच्छात्राभिभावकपाठकविशेषज्ञानां महती प्रभावकारिणी भूमिका भवति । अत उक्तविषयेषु रचनात्मकपरामर्शदानेनोपकर्तुं पाठ्यक्रमविकासकेन्द्रमिदं तांस्तान् सर्वानेव महानुभावान् सप्रश्रयमभ्यर्थयते ।

नेपालसर्वकारः

**शिक्षाविज्ञानप्रविधिमन्त्रालयः**

**पाठ्यक्रमविकासकेन्द्रम्**

# विषयसूची


| पाठसङ्ख्या | पाठः | पृष्ठसङ्ख्या |
|---|---|---|
| १ | सामान्यहोमविधिः (अग्निस्थापनविधिः) | १ |
| २ | गर्भाधानम् | ७४ |
| ३ | पुंसवनम् | ७८ |
| ४ | सीमन्तोन्नयनम् | ८१ |
| ५ | जातकर्म | ८४ |
| ६ | षष्ठिकादेवी-पूजा | ९३ |
| ७ | नामकरणसंस्कारः | १०५ |
| ८ | अन्नप्राशनसंस्कारः | १०९ |
| ९ | कर्णवेधः | ११२ |
| १० | जन्मोत्सवविधिः | ११५ |
| ११ | श्रीस्वस्थानीव्रतपूजाविधिः | १२४ |
| १२ | स्थानीयपूजा | १३९ |
| १३ | दशदानविधिः | १४३ |
| १४ | पञ्चधेनुदानविधिः | १५१ |
| १५ | अष्टमहादानानि | १५५ |
| १६ | दाहसंस्कारो दशगात्रविधिश्च | १५९ |

# १ सामान्यहोमविधिः (अग्निस्थापनविधिः)[1]

श्रीमङ्गलमूर्तये नमः

नमः कर्मात्मने तस्मै ब्रह्मणे जगदात्मने ।
नम आस्याय देवानां वैश्वानरस्वरूपिणे ॥

१. अग्निस्थापनविधिः

(क) होम गर्ने कहाँ र कसरी ? भन्ने प्रश्नमा यहाँ र यसरी भनी मार्गनिर्देशन गर्ने विधिविशेष सहित सबै किसिमका स्मार्त कर्महरूमा सर्वसाधारण रूपले गरिने होमविधिलाई सामान्य होमविधि भनिन्छ । यसै अन्तर्गतको कुण्ड वा स्थण्डिल (होमवेदी) बनाएर त्यसमा अग्निको स्थापना गरी सामान्य रूपले होम गर्ने पद्धतिलाई 'अग्निस्थापना' भन्दछन् ।

वैदिक धर्म अनुसार शान्तिक, पौष्टिक संस्कार आदि कर्महरू जेजति चलिआएका छन्, तिनमा विशेष गरेर जातकर्म, नामकरण, अन्नप्राशन, चूडा, उपनयन, विवाह आदि संस्कार, ग्रहशान्ति, विनायकशान्ति, श्रीशान्ति, ऋतुशान्ति, मूलशान्ति आदि शान्तिक र तुलसीको होम, विष्णुयाग, रुद्रयाग, व्रतप्रतिष्ठा, देवप्रतिष्ठा आदि पौष्टिक कर्महरू गर्दा अग्निस्थापनाको विधिअनुसार होम गर्ने प्रचलन छ । अन्यत्र शाखान्तरहरूमा वा हाम्रो आफ्नै सूत्रसँग समेत केही कुरामा भिन्नता जस्तो देखिएता पनि नेपाली परम्परामा हाम्रो पूर्वज विद्वान्हरूले यसै "अग्निस्थापना" पद्धतिलाई मान्यता दिई कर्म गर्दै आएकाले हामी पनि उनीहरूकै अनुसरण गर्दै सोही पद्धतिलाई यथासम्भव स्पष्ट र सरल रूपमा प्रस्तुत गर्दछौँ ।

(ख) भूमि स्वभावैले पवित्र छन्, तापनि संस्कार नगरिएको भूमिमा यज्ञ गर्न योग्य मानिँदैन । यसकारण बढार्नु, लिप्नु, रेखा कोर्नु, रेखाबाट माटो झिक्नु, जलले सेचन गर्नुसमेत ५ संस्कारहरूद्वारा भूमिलाई विशेष पवित्र र यज्ञ गर्न योग्य बनाइन्छ । भूमिको संस्कारदेखि लिएर कुशकण्डिकाका सारा संस्कारहरू सूत्रमा मन्त्ररहित केवल विधि मात्र बताइएको भएता पनि 'मन्त्रान्ते कर्म' अनुसार हाम्रो पद्धतिमा मन्त्रसहित गर्ने परम्परा भइरहेकाले यहाँ पनि सबै विधिहरू शास्त्रवचन वा मन्त्रसहित प्रस्तुत गरिएका छन् ।

# पञ्चगव्यप्राशनविधि

जाताऽऽशौचान्ते मृताशौचान्ते तथा उपाकर्मकोटिहोमसप्ताहादिनैमित्तिकशुभकर्मारम्भे च शरीरशुद्ध्यर्थं पञ्चगव्यप्राशनस्यावश्यकत्वादत्र प्रस्तूयते । तद्यथा -

**पञ्चगव्यं पवित्रं तु आहरेत्ताम्रभाजने ।**

**गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥**

**आप्यायस्वेति च क्षीरं दधिक्राब्णोति वै दधि ।**

**तेजोसि शुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥** - कृत्यकल्पतरौ

**पञ्चगव्यसम्मेलनमन्त्राः -**

**ॐ तत्सवितु … … इत्यनेन गोमूत्रम्,**

**ॐ गन्धद्वारान्दुराधर्षां नित्यपुष्टां करीषिणीम् ।**

**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥** इत्यनेन गोमयम् ।

**ॐ आप्यायस्व समेतु ते विश्वतः सोम वृष्ण्यम् ।**

**भवा वाजस्य सङ्गथे ॥** इत्यनेन क्षीरम् ।

**ॐ दधिक्राब्णोऽ अकारिषञ्जिष्णोरश्वस्य वाजिनः ।**

**सुरभिनो मुखाकरत्प्रणऽ आयू ꣳषि तारिषत् ॥** इत्यनेन दधि ।

**ॐ तेजोसि शुक्रमस्यमृतमसि धामनामासि ।**

**प्रियं देवाना मना धृष्टन्देवयजनमसि ॥** इत्यनेन आज्यम् ।

**ॐ देवस्यत्वा सवितुः प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ।**

**अग्नये जुष्टं गृह्णाम्यग्नीषोमाभ्याञ्जुष्टं गृह्णामि ॥** इत्यनेन कुशोदकम् ।

ततो गायत्रीमन्त्रेण दशवारं सम्मन्त्र्य प्राशयेदनेन मन्त्रेण -

**पञ्चगव्यप्राशनमन्त्रः -**

**ॐ यत्त्वगस्थिगतं पापं देहे तिष्ठति मामके ।**

**प्राशनात्पञ्चगव्यस्य दहत्वग्निरिवेन्धनम् ॥**

(इति पञ्चगव्यप्राशनविधिः)

## कर्मपात्रनिर्माणविधिः

आदौ कर्मपात्रं विधाय तत्कुशप्रयोगपूर्वकमेव कर्म कर्तव्यमिति सर्वकर्मादौ कर्मपात्रनिर्माण-विधिः प्रस्तूयते, तद्यथा -

**ॐ यद्देवा देवहेडनन्देवासश्चकृमा व्वयम् ।**

**अग्निर्म्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥**

**ॐ यदि दिवा यदि नक्तमेनाꣳसि चकृमा व्वयम् ।**

**वायुर्मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥**

**ॐ यदि जाग्रद्यदि स्वप्नऽएनाꣳसि चकृमा व्वयम् ।**

**सूर्य्यो मा तस्मादेनसो व्विश्वान्मुञ्चत्वꣳ हसः ॥** इति देवानावाह्य

**ॐ पवित्रे स्थो व्वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः । देवीरापोऽअग्रेगुवोऽअग्रेपुवोग्रऽइममद्य यज्ञन्नयताग्रे यज्ञपतिꣳसुधातुं यज्ञपतिन्देवयुवम् ॥**

इति मन्त्रेण कर्मपात्रे पवित्रं क्षिपेत्

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्स्रवन्तु नः ॥** इति जलम्

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्व्वभूतानां तामिहोपह्वये श्रियम् ॥**

इति गन्धम्

**ॐ अक्षन्नमीमदन्त ह्यवप्रियाऽअधूषत । अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र ते हरी ॥** इति अक्षतान्

**ॐ यवोसि यवयास्मद्द्वेषो यवयारातीर्दिवे त्वान्तरिक्षाय त्वा पृथिव्यै त्वा । शुन्धन्ताँल्लोकाः पितृषदनाः पितृषदनमसि ॥**

इति यवान्

**ॐ तिलोऽसि सोमदैवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितृँल्लोकान् प्रिणाहि नः ॥** इति तिलान्

**ॐ श्रीश्च ते लक्ष्मीश्चपत्क्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्व्वलोकम्मऽइषाण ॥** इति पुष्पं क्षिपेत्

ततः कुशत्रयसहितं कर्मपात्रोदकमादाय -

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत्पुण्डरीकाक्षं स बाहयाभ्यन्तरः शुचिः ॥**

**ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु ।**

इति पूजाद्रव्याणि आत्मानञ्च सिञ्चेत् ।

॥ इति कर्मपात्रनिर्माणविधिः ॥

## (क) पञ्च भूसंस्काराः

| |
|---|
| १. परिसमूहनम् २. उपलेपनम् ३. उल्लेखनम् ४. उद्धरणम् ५. अभ्युक्षणम् |

भूरसीति भूमिशोधनम् -

**ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया विश्वस्य भुवनस्य धर्त्री । पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीं मा हिꣳसीः ॥**

अश्मा च म इति मृत्तिकास्थापनम् -

**ॐ अश्मा च मे मृत्तिका च मे गिरयश्च मे पर्वताश्च मे सिकताश्च मे व्वनस्पतयश्च मे हिरण्यञ्च मेऽयश्च मे श्यामञ्च मे लोहञ्च मे सीसञ्च मे त्रपु च मे यज्ञेन कल्पन्ताम् ॥**

एषवस्तोम इति दर्भग्रहणम् -

**ॐ एषवस्तोमो मरुतऽइयङ्गीर्म्मान्दार्य्यस्य मान्यस्य कारोः । एषायासीष्ट तन्वे वयां विद्यामेषं वृजनञ्जीरदानुम् ॥**

यद्देवेति दर्भैः परिसमूहनम् -

**ॐ यद्देवा देवहेडनं देवासश्चकृमा व्वयम् । अग्निर्म्मा तस्मादेनसो व्विश्वान् मुञ्चत्वꣳहसः ॥**

मानस्तोक इति गोमयेन उपलेपनम् -

**ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः । मानो वीरान् रुद्रभामिनो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥**

त्वामिद्धीति स्फ्येन स्रुवेण वा उल्लेखनम् -

**ॐ त्वामिद्धि हवामहे सातौ व्वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्व्वतः ॥**

प्रथमा द्वितीयैरित्यादिभिः प्रागग्रमुदक्संस्थं रेखात्रयं खादिरेण हस्तमात्रेण खड्गाकृतिना स्फ्येन स्रुवमूलेन वा कुर्यात् ।

**ॐ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः सामान्यृग्भिर्ऋचः पुरोनुवाक्याभिः पुरोनुवाक्या याज्ज्याभिर्याज्ज्या व्वषट्कारैर्व्वषट् काराऽआहुतीभिराहुतयो मे कामान्त्समर्द्धयन्तु भूः स्वाहा ॥**

**ॐ दक्षिणामारोह त्रिष्टुप्त्वावतु बृहत्साम पञ्चदशस्तोमो ग्रीष्मऽऋतुः क्षत्रं द्रविणम् ॥**

**ॐ प्रतीचीमारोह जगती त्वावतु व्वैरूपꣳसाम सप्तदशस्तोमो वर्षाऽऋतुर्विड् द्रविणम् ॥**

**ॐ उदीचीमारोहानुष्टुप्त्वावतु व्वैराजꣳसामैकविꣳ शस्तोमः शरदृतुः फलं द्रविणम् ॥**

सदसस्पतिमिति अनामिकाङ्गुष्ठाभ्यां यथोल्लिखिताभ्यो रेखाभ्यस्त्रिरुद्धरणम् -

**ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिम्मेधा मयासिषꣳस्वाहा ॥**

व्रतङ्कृणुतेति वेद्यां स्रुवेणोद्धृतपांसूननामिकाङ्गुष्ठाभ्यामुद्धृत्य तानैशान्यां क्षिपेत् ।

**ॐ व्व्रतङ्कृणुत व्व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो व्वनस्पतिर्यज्ञियः । दैवीन्धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳसुतीर्थानो ऽ असद्वशे । ये देवा मनो जाता मनो युजो दक्षक्रतवस्तेनोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥**

शन्नोदेवीरिति अभ्युक्षणम् -

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥**

॥ इति पञ्च भूसंस्काराः ॥

## (ख) स्वस्तिवाचनम्

**ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।**

**स्वस्ति पूषाऽअसुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना ॥**

**स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः ।**

**बृहस्पतिꣳसर्वगणꣳस्वस्तये स्वस्तयऽआदित्यासो भवन्तु नः ॥**

**विश्वेदेवा नोऽअद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ।**

**देवाऽअवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वꣳहसः ॥**

**स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ।**

**स्वस्ति नऽइन्द्रश्चाग्निश्च स्वस्ति नोऽअदिते कृधि ॥**

**स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ।**

**पुनर्ददताघ्नता जानता सङ्गमेमहि ॥**

**स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।**

**असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥**

**अꣳहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।**

**प्रयतपाणिः शरणं प्रपद्ये स्वस्ति संबाधेष्वभयं नोऽअस्तु ॥**

ततः '**आशुः शिशानः**' इति समग्रं पठेत् ।

इति स्वस्तिवाचनमन्त्रान् पठन् रङ्गवल्लीं रचयेत् ।

# रङ्गवल्लीनिर्माणम्



## (ग) पूर्वादिक्रमेण अष्टदिक्षु मध्यभागे च पूजनम् –

पृथिव्याः सधस्थादिति पूर्वे -

**ॐ पृथिव्याः सधस्थादग्निं पुरीष्यमङ्गिरस्वदाभराग्निं पुरीष्यमङ्गिरस्वदच्छेमोऽग्निं पुरीष्यमङ्गिरस्वद् भरिष्यामः ॥**

अग्निश्चेति दक्षिणे -

**ॐ अग्निश्च पृथिवी च सन्नते ते मे सन्नमतामदो वायुश्चान्तरिक्षञ्च सन्नते ते मे सन्नमतामदऽआदित्यश्च द्यौश्च सन्नते ते मे सन्नमतामदऽआपश्च व्वरुणश्च सन्नते ते मे सन्नमतामदः । सप्त सꣳसदोऽअष्टमी भूतसाधनी सकामाँ२ ऽ अध्वनस्कुरु संज्ञानमस्तु मेऽमुना ॥**

वायो ये त इति पश्चिमे -

**ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये ॥**

सोमो धेनुमित्युत्तरे -

**ॐ सोमो धेनुꣳसोमोऽअर्वन्तमाशुꣳसोमो व्वीरङ्कर्मण्यन्ददाति । सादन्यं व्विदथ्यꣳसभेयं पितृश्रवणं यो ददाशदस्मै ॥**

अग्निन्दूतमित्याग्नेय्याम् -

**ॐ अग्निन्दूतं पुरोदधे हव्यवाहमुपब्रुवे । देवाँऽआसादयादिह ॥**

कयानश्चित्र इति नैर्ऋत्याम् -

**ॐ कयानश्चित्रऽआभुवदूती सदावृधः सखा । कया शचिष्ठया व्वृता ॥**

वायुरनिलमिति वायव्याम् -

**ॐ व्वायुरनिलममृतमथेदं भस्मान्तꣳशरीरम् । ओ३म् क्रतो स्मर क्लीबे स्मर कृतꣳस्मर ॥**

ईशावास्यमित्यैशान्याम् -

**ॐ ईशावास्यमिदꣳसर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥**

ततस्तिसृभिर्मध्ये पूजनम् -

**ॐ सूर्यरश्मिर्हरिकेशः पुरस्तात्सविता ज्योतिरुदयाँ२ऽअजस्रम् । तस्य पूषा प्रसवे याति विद्वान्त्संपश्यन् विश्वा भुवनानि गोपाः ॥**

**ॐ प्रजापते नत्वदेतान्यन्यो व्विश्वा रूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वयꣳस्याम पतयो रयीणाम् ॥**

**ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषꣳस्वाहा ॥**

(घ) इन्धनशोधनं स्थापनञ्च

कस्त्वा सत्य इतीन्धनं शोधयेत् -

**ॐ कस्त्वा सत्यो मदानाम्मꣳहिष्ठो मत्सदन्धसः । दृढा चिदारुजे वसु ॥**

त्वामिद्धीति दारुकं स्थापयेत्[२] -

**ॐ त्वामिद्धि हवामहे सातौ व्वाजस्य कारवः । त्वां व्वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः ॥**

### (ङ) अग्नेः संस्कारः स्थापनञ्च –

कांस्यपात्रे निहितं कांस्यपात्रेणैव पिहितमग्निं स्थण्डिलादाग्नेयभागे निधाय क्रव्यादांशं नैर्ऋत्यदिशि क्षिपेत् - **ॐ क्रव्यादाय नमः** । ततः स्थण्डिलेऽग्निं पश्चादानीय,

अग्नावग्निरित्यग्निं शोधयेत् -

**ॐ अग्नावग्निश्चरति प्रविष्टऽऋषीणां पुत्रोऽअभि शस्तिपावा । स नः स्योनः सुयजा यजेह देवेभ्यो हव्यꣳसदमप्रयुच्छन्त्स्वाहा ॥**

---

२ समित्स्थापनप्रकारः- पञ्च त्रीणि तथा त्रीणि पुनः पञ्च विधानतः । दारुकं स्थापयित्वा च योनिमुपरि कारयेत् ॥

मयि गृह्णामीति कांस्यपात्रे निहितं तेनैव पिहितमग्निं गृह्णाति -

**ॐ मयि गृह्णाम्यग्ग्रेऽअग्निꣳरायस्पोषाय सुप्रजास्त्वाय सुवीर्य्याय । मामु देवताः सचन्ताम् ॥**

गर्ब्भोऽअस्योषधीनामिति गर्भाधानम् -

**ॐ गर्ब्भोऽअस्योषधीनां गर्ब्भो व्वनस्पतीनाम् । गर्ब्भो व्विश्वस्यभूतस्याग्ने गर्ब्भोऽअपामसि ॥**

इत्यस्याग्नेर्गर्भाधानं करोमि ।

विवस्वन्नादित्य इति पुंसवनम् -

**ॐ व्विवस्वन्नादित्यैषते सोमपीथस्तस्मिन्मत्स्व । श्रदस्मै नरो व्वचसे दधातन यदाशीर्द्दा दम्पती व्वाममश्नुतः । पुमान्पुत्रो जायते व्विन्दते व्वस्वधा व्विश्वाहारपऽएधते गृहे ॥**

इत्यस्याग्नेः पुंसवनं करोमि ।

अजीजनोहीति सीमन्तोन्नयनम् -

**ॐ अजीजनो हि पवमानसूर्य्यं व्विधारे शक्मना पयः । गोजीरयारꣳहमाणः पुरन्ध्या ॥**

इत्यस्याग्नेः सीमन्तोन्नयनं करोमि ।

एजतु दशमास्य इति जातकर्म -

**ॐ एजतु दशमास्यो गर्ब्भो जरायुणा सह । यथायँ व्वायुरेजति यथा समुद्रऽएजति । एवायन्दशमास्योऽअस्रज्जरायुणा सह ॥**

इत्यस्याग्नेर्जातकर्म करोमि ।

(अत्र पिहितकांस्यपात्रस्योद्घाटनम्)

यदा पिपेषेति नामकरणम् -

**ॐ यदा पिपेष मातरम्पुत्रः प्रमुदितो धयन् । एतत्तदग्नेऽअनृणो भवाम्यहतौ पितरौ मया । सम्पृचस्थ सम्मा भद्रेण पृङ्क्त विपृचस्थ व्विमा पाप्मना पृङ्क्त ॥**

इत्यस्याग्नेर्नामकरणं करोमि ।

पूषा पञ्चाक्षरेणेति निष्क्रमणम् -

**ॐ पूषा पञ्चाक्षरेण पञ्चदिशऽउदजयत्ताऽउज्जेषᳬसविता षडक्षरेण षडृतूनुदजयत्तानुज्जेषं मरुतः सप्ताक्षरेण सप्तग्राम्यान् पशूनुदजयँस्तानुज्जेषं बृहस्पतिरष्टाक्षरेण गायत्रीमुदजयत्तामुज्जेषम्मित्रो नवाक्षरेण ॥**

इत्यस्याग्नेर्निष्क्रमणं करोमि ।

अन्नपतेऽन्नस्येति अन्नप्राशनम् -

**ॐ अन्नपतेऽन्नस्यनो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥**

इत्यस्याग्नेरन्नप्राशनं करोमि ।

अग्नऽआयाहीति चूडाकरणम् -

**ॐ अग्नऽआयाहि वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥**

इत्यस्याग्नेश्चूडाकरणं करोमि ।

भद्रङ्कर्णेभिरिति कर्णवेधः -

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।**

**स्थिरैरङ्गैस्तुष्टुवाᳬसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥**

इत्यस्याग्नेः कर्णवेधं करोमि ।

अग्निरेकाक्षरेणेति उपनयनम् -

**ॐ अग्निरेकाक्षरेण प्राणमुदजयत्तामुज्जेषमश्विनौ द्व्यक्षरेण द्विपदो मनुष्यानुदजयत्ता-नुज्जेषँ विष्णुस्त्र्यक्षरेण त्रीँल्लोकानुदजयत्तानुज्जेषᳬसोमश्चतुरक्षरेण चतुष्पदः पशूनुदजयत्ता-नुज्जेषम्पूषापञ्चाक्षरेण ॥**

इत्यस्याग्नेरुपनयनं करोमि ।

ततो सव्याहृतिकां गायत्रीं श्रावयेत् -

**ॐ भूर्भुवः स्वः व्वैश्वानराय विद्महे सप्तजिह्वाय धीमहि । तन्नो ऽअग्निः प्रचोदयात् ॥**

इत्यग्निं गायत्रीं श्रावयामि ।

व्रतङ्कृणुतेति समावर्तनम् -

**ॐ व्व्रतङ्कृणुत व्व्रतङ्कृणुताग्निर्ब्रह्माग्निर्यज्ञो व्वनस्पतिर्यज्ञियः । दैवीन्धियं मनामहे सुमृडीकामभिष्टये वर्चोधां यज्ञवाहसꣳसुतीर्थानो ऽ असद्वशे । ये देवा मनो जाता मनो युजो दक्षक्रतवस्तेनोऽवन्तु ते नः पान्तु तेभ्यः स्वाहा ॥**

इत्यस्याग्नेः समावर्तनं करोमि ।

गावऽउपावतेति गोदानकर्म -

**ॐ गावऽउपावतावतं मही यज्ञस्य रप्सुदा । उभा कर्ण्णा हिरण्यया ॥**

इत्यस्याग्नेर्गोदानकर्म करोमि ।

भगऽएवेति विवाहः -

**ॐ भगऽएव भगवाँ२ऽअस्तु देवास्तेन व्वयं भगवन्तः स्याम । तन्त्वा भग सर्व्वऽइज्जोहवीति सनो भग पुरऽएता भवेह ॥**

इत्यस्याग्नेविवाहं करोमि ।

तत ऋतावानमित्यादि कण्डिकात्रयं पठेत् -

**ॐ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्म्ममीमहे । उपयामगृहीतोऽसि व्वैश्वानराय त्वैषते योनिर्व्वैश्वानरायत्वा ॥**

**ॐ व्वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभि श्रीः । इतो जातो व्विश्वमिदं व्विचष्टे व्वैश्वानरो यतते सूर्य्येण । उपयामगृहीतोऽसि व्वैश्वानराय त्वैषते योनिर्व्वैश्वानरायत्वा ॥**

**ॐ व्वैश्वानरो नऽऊतयऽआप्रयातु परावतः। अग्निरुक्थेन वाहसा। उपयामगृहीतोऽसि व्वैश्वानराय त्वैषते योनिर्वैश्वानरायत्वा ॥**

अग्निर्म्मूर्धेति कुण्डे स्वाभिमुखं वह्निं प्रवेशयेत् -

**ॐ अग्निर्म्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम्। अपाꣳरेताꣳसि जिन्वति ॥**

इति कुण्डे स्थण्डिले वा अग्निं स्थापयेत्।

स्थिरो भवेति प्रज्वालयेत् -

**ॐ स्थिरो भव व्वीड्वङ्गऽआशुर्भव व्वाज्यर्वन्। पृथुर्भव सुषदस्त्वमग्नेः पुरीषवाहणः ॥**

ततोऽग्निं प्रार्थयेत् -

**ॐ आवाहये त्वां पुरुषं महान्तं सुरासुरैर्वन्दितपादपद्मम्।**

**ब्रह्मादयो यस्य मुखे वसन्ति विशस्व[३] कुण्डे सुरलोकनाथ ॥**

ततोऽग्नेर्दक्षिणतस्त्रिभिर्दर्भैर्ब्रह्मासनमास्तीर्य[४] हिरण्यगर्भ इति मन्त्रेण पञ्चाशद्भिः कुशैर्ब्रह्मपवित्रकरणम्[५] -

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत्। सदाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा विधेम ॥**

---

३. 'प्रविश्य' यस्तो पाठ पनि पाइन्छ।

४. प्रायः प्रचलित पुस्तकहरूमा 'षड्दर्भैर्ब्रह्मासनम् वा ब्रह्मपवित्रकरणम्' भन्ने यस्तो पाठ पाइन्छ तापनि "ब्रह्माचार्यप्रणीतानामासनञ्च त्रिभिः कुशैः। न द्वाभ्यां नैकदर्भेण ऋषयो बहवो विदुः ॥" अत्रिगृह्यग्रन्थमा यस्तो वचन भएको र श्रौतयज्ञमा पनि 'षडासनानि भनेर ब्रह्मा, यजमान, प्रणीता र अध्वर्युहरूको आसन राख्दा ३/३ कुशको आसन राख्ने परम्परा भएको हुँदा ३ कुशकै आसन राख्नु उचित देखिन्छ।

५. "पञ्चाशद्भिर्भवेद् ब्रह्या तदर्धेन तु विष्टरः। दक्षिणावर्तको ब्रह्मा वामावर्तस्तु विष्टरः" यस्तो वचन भएकाले ५० कुशको दायाँतिरबाट घुमाएर पवित्र ग्रन्थि बनाएको ब्रह्मा र २५ कुशको बायाँतिरबाट घुमाएर पवित्र ग्रन्थि बनाएको विष्टर हुनुपर्दछ।

आब्रह्मन्निति ब्रह्माणमग्निप्रदक्षिणं कारयित्वा "**अस्मिन् कर्मणि त्वं मे ब्रह्मा भव**" इत्युक्त्वा उदङमुखमुपवेशयेत्[६] -

**ॐ आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्जन्यो व्वर्षतु फलवत्यो नऽओषधयः पच्यन्ताँ योगक्षेमो नः कल्पताम्** ॥

यस्य कुर्म्म इति होतुरासनम् -

**ॐ यस्य कुर्म्मो गृहे हविस्तमग्ने व्वर्द्धया त्वम् । तस्मै देवाऽअधिब्रुवन्नयञ्च ब्ब्रह्मणस्पतिः** ॥

अग्ने प्रेहीति अग्नेरुत्तरतो यजमानासनम्[७] -

**ॐ अग्ने प्रेहि प्रथमो देवयताञ्चक्षुर्द्देवानामुत मर्त्यानाम् । इयक्षमाणा भृगुभिः सजोषाः स्वर्यन्तु यजमानाः स्वस्ति** ॥

परीत्य भूतानीति अग्नेरुत्तरतो वायव्ये च प्रणीतार्थे आसनद्वयं कल्पयित्वा प्रणीताग्न्योर्मध्ये प्रोक्षण्यासनं च निदध्यात् -

**ॐ परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसँविवेश** ॥

---

६. 'यदा ब्रह्मा न भवति, तदा ब्रह्मा कौशः कार्यः' इति हरिहरः । ब्रह्मा कौशश्चेत् तदा प्रैषानुप्रैषौ न भवतः ।

७. प्रचलित पद्धतिहरूमा 'अग्नेर्दक्षिणतो ब्रह्मसमीपे यजमानासनम्' अर्थात् यजमानको आसन अग्निको दक्षिणतिर ब्रह्माको नजिक राख्ने क्रम देखिन्छ । तर 'उत्तरतः उपचारो यज्ञः' अर्थात् उत्तरतिर बसेर यज्ञको सेवा गर्नू । यस वचनअनुसार स्मार्त यज्ञमा सर्वत्र यजमानको आसन अग्निको उत्तरतिर हुनुपर्दछ । दर्शपूर्णमास आदि श्रौत यज्ञमा मात्र दक्षिणतिर हुन उपयुक्त छ । कारण- "दक्षिणतो ब्रह्मयजमानयोरासने" (का.श्रौ.सू., अ.१ क.८ सू.२७) अर्थात् ब्रह्मा र यजमानको आसन अग्निको दक्षिणतिर हुनुपर्छ । यो श्रौत यज्ञलाई लिएर विधान गरिएको कुरा हो र यसै वचनका आधारमा स्मार्त यज्ञमा पनि ब्रह्मा यजमान दुवैको आसन अग्निको दक्षिणतिर स्वतः प्राप्त हुन्छ । यसरी दुवैको आसन दक्षिणतो ब्रह्मासनमास्तीर्य" (पा.गृ.सू., का.१ कं.१ सू.२) दक्षिणतिर ब्रह्माको आसन हुनुपर्छ भनेर किन भन्नुपर्थ्यो । अतः यसबाट स्पष्ट हुन्छ कि- श्रौत यज्ञमा मात्र यजमानको आसन दक्षिणतिर हुन्छ, स्मार्त यज्ञमा दक्षिणतिर नभएर उत्तरतिरै हुनुपर्छ । यस विषयमा गृह्यसूत्रको कुशकण्डिकाको भाष्यमा आचार्य गदाधरले विस्तृत शास्त्रार्थपूर्वक स्पष्ट गरेका छन् ।

इन्द्रऽआसामिति वारणं (तच्च दण्डेन सह द्वादशाङ्गुलदीर्घं चतुरङ्गुलविस्तारं चतुरङ्गुलखातं) प्रणीतापात्रं वामहस्तेनादाय -

**ॐ इन्द्रऽआसान्नेता बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः । देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम् ॥**

उदुत्तममिति दक्षिणहस्तेनोदकं सम्पूर्य वायव्यासने विधाय दक्षिणानामिकयाऽऽलभ्य कुशैराच्छाद्य ब्रह्मणो मुखमवलोक्य प्रणीतापात्रं प्रणीतासने निदध्यात् -

**ॐ उदुत्तमं व्वरुण पाशमस्मदबाधमं व्विमध्यमꣳश्रथाय । अथा व्वयमादित्यव्व्रते तवानागसोऽअदितये स्याम ॥**

ये ते शतमिति बर्हिर्मुष्टिमादाय ईशानादिप्रागग्रैर्बर्हिर्भिरुदक्संस्थमग्नेः परिस्तरणं कुर्यात्[८] -

**ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा वितता महान्तः । तेभिर्नोऽअद्य सवितोत विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥**

## (च) पात्रासादनम्[९] –

तत्त्वा यामीति मन्त्रं पठित्वा यावद्भिः पदार्थैः प्रयोजनं भवति तावतः पदार्थान् द्वन्द्वशः प्राक्संस्थानुदगग्रानग्नेरुत्तरतः पश्चाद्वाऽऽसादयेत् -

---

८. परिस्तरणम् = बर्हि राख्नु अर्थात् अग्निको वरिपरि कुशको टुप्पो पूर्वतिर पारेर ईशानदेखि उत्तरसम्म ओच्छ्याइदिनु तर यहाँ प्रचलित सबैजसो अग्निस्थापनाका विधिवचनहरूमा बर्हि राख्ने क्रम यस्तो पाइन्छ- "बर्हिषो मुष्टिमादाय चतुर्धा विभज्यैकैकेन भागेन आग्नेयादीशानान्तमुत्तराग्रम्, ब्रह्मणोऽग्निपर्यन्तं पूर्वाग्रम्, नैर्ऋत्याद्वायव्यान्तमुत्तराग्रम्, अग्नितः प्रणीतापर्यन्तं पूर्वाग्रं कुशैः परिस्तृणीयात्" । हामीले यसको प्रथम संस्करणमा पनि यही पाठ राखेका थियौं । यसलाई परिवर्तन गरी कुशकण्डिका भाष्यमा हरिहरको कारिकाको र हाम्रै नेपाली परम्पराको सत्कर्मरत्नावलीको आधारमा माथि मूलमा भएको पाठ राखिएको छ ।

९. पात्रासादनम् = यज्ञमा आवश्यक यज्ञपात्र र अन्य वस्तुहरू क्रम मिलाएर ठिक पारेर राख्नु । पात्रासादनको अर्थ केवल पात्रहरू ठिक पार्नु मात्र होइन, यज्ञको एक अङ्ग पनि हो । याज्ञिकहरू पात्रासादन नभएको यज्ञलाई विधिच्युत या अङ्गहीन भएको मान्दछन् । यसैले यज्ञमा पात्रासादन भएको हुनुपर्छ । पात्रासादनको क्रम कारिकामा यसप्रकार बताइएको छ -

"आसादनं तु पात्राणां प्रादेशान्तरके बुधः । अङ्गुलद्वयमानेन द्वन्द्वं द्वन्द्वान्तरे न्यसेत् ॥

पश्चादुत्तरतो वा स्यात् पात्रासादनमग्नितः । उत्तरे चेदुदक्संस्थं प्राक्संस्थं पश्चिमे भवेत् ॥

त्यस्तै कात्यायनले पनि भनेका छन् - "प्राञ्च प्राञ्चमुदगग्नेरुदगग्रं समीपतः"

अर्थात् अग्निको पश्चिमतिर वा उत्तरतिर जोडा जोडा मिलाएर राख्नू । एकजोडामा दुई अङ्गुलको फरक होस् । एक जोडाबाट अर्को जोडामा एक कुरेतको फरक होस् । अग्निको पश्चिमतिर पात्रासादन गर्ने भएमा दक्षिणबाट आरम्भ गरेर उत्तरतिर समाप्ति गर्नुपर्छ र पात्रहरूको अग्रभाग पूर्वतिर पार्नुपर्छ । अग्निको उत्तरतिर पात्रासादन गरेमा पश्चिमबाट आरम्भ गरेर पूर्वमा समाप्ति गर्नुपर्छ । पात्रको अग्रभाग उत्तरतिर हुनुपर्छ ।

ततः पवित्रे कृत्वा "पवित्रे स्थः" इति पवित्रकरणार्थं साग्रेऽन्तर्गर्भे द्वे कुशतरुणे सादयेत् ।

**ॐ तत्त्वा यामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः। अहेडमानो वरुणेह बोध्यरुशꣳसमानऽआयुः प्रमोषीः ॥**

त्र्यम्बकमिति पवित्रच्छेदनार्थानि प्रादेशपरिमितानि कुशतरुणानि दृढानि स्थापयेत् -

**ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥**

**ॐ पवित्त्रेस्थो वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्त्रेण सूर्य्यस्य रश्मिभिः। देवीरापोऽअग्ग्रेगुवोऽअग्ग्रेपुवोग्ग्रऽइममद्य यज्ञन्नयताग्ग्रे यज्ञपतिꣳसुधातुं यज्ञपतिन्देवयुवम् ॥**

इमम्मे वरुण इति वारणं द्वादशाङ्गुलदीर्घं करतलसम्मितखातं पद्मपत्राकृतिं कमलमुकुलाकृतिं वा प्रोक्षणीपात्रम् (न्युब्जम्) -

**ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके ॥**

घृतवतीति तैजसी मृन्मयी वा द्वादशाङ्गुलविस्तृता प्रादेशोच्चा आज्यस्थाली (न्युब्जम्) -

**ॐ घृतवती भुवनानामभिश्रियोर्वी पृथ्वी मधुदुघे सुपेशसा। द्यावापृथिवी वरुणस्य धर्म्मणा विष्कभिते अजरे भूरिरेतसा ॥**

अन्नपतेऽन्नस्येति तादृश्येव चरुस्थाली (न्युब्जम्) -

**ॐ अन्नपतेऽन्नस्यनो देह्यनमीवस्य शुष्मिणः। प्रप्रदातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे ॥**

ततः शादन्ददि्भरिति सम्मार्जनकुशास्त्रिप्रभृतयः -

**ॐ शादन्ददि्भरवकान्दन्तमूलैर्मृदं ब्बर्स्वैस्तेगान्दꣳष्ट्राभ्याꣳसरस्वत्याऽअग्रजिह्वं जिह्वायाऽ-उत्सादमवक्रन्देन तालु वाजꣳहनुभ्यामपऽआस्येन व्वृषणमाण्डाभ्यामादित्याँ२ श्मश्रुभिः पन्थानं भ्रूब्भ्यान्द्यावापृथिवी व्वर्तोभ्याँ विद्युतङ्कनीनकाभ्याꣳशुक्लाय स्वाहा कृष्णाय स्वाहा पार्य्याणि पक्ष्माण्यवार्य्याऽइक्षवोऽवार्य्याणि पक्ष्माणि पार्य्याऽइक्षवः।**

उपयामगृहीतोऽसीति उपयमनकुशाँस्त्रयोदश -

**ॐ उपयामगृहीतोऽस्यन्तर्यच्छ मघवन्पाहि सोमम् । उरुष्य रायऽएषो यजस्व ॥**

समिधाग्निमिति समिधस्तिस्रः पालाश्यः प्रादेशमात्र्यः पृथक् स्थापयेत् -

**ॐ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥**

स्रुवः खादिरो हस्तमात्रोऽङ्गुष्ठपर्वमात्रखातः परिणाहवर्तुलपुष्करः (न्युब्जः) ।

गव्यम् आज्यम् । चरुश्चेत् त्रिप्रक्षालिता व्रीहितण्डुलाः ।

पूर्णपात्रम्- षट्पञ्चाशदधिकद्विशत(२५६)मुष्टिपरिमितं परार्घ्यम्, बहुभोक्तृपुरुषाहारपर्यन्तम् अपरार्घ्यं वा तण्डुलाद्यन्नम् । अन्यानि चोपयुक्तानि वस्तून्यासाद्य,

**पवित्रनिर्माणम्-** आसादिते द्वे कुशतरुणे गृहीत्वा अग्रतः प्रादेशमात्रं परिमाय तयोरुपरि आसादितानि त्रीणि कुशतरुणानि तिर्यङ् निधाय पवित्रमूलेन पवित्रे प्रदक्षिणक्रमेणावेष्ट्य त्रयाणां मूलाग्राणि द्वयोर्मूलं च दक्षिणहस्तेन, पवित्रे च वामहस्तेन गृहीत्वा '**पवित्रे स्थः**' इति मन्त्रेण प्रच्छिद्य द्वयोर्मूलं त्रीणि चोत्तरतः क्षिपेत् ।

देवस्य त्वेति द्वे पवित्रे प्रणीतापात्रे निदध्यात् -

**ॐ देवस्यत्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नये जुष्टङ्गृह्णाम्यग्नीषोमाभ्यां जुष्टङ्गृह्णामि ॥**

ततः प्रोक्षणीपात्रं प्रणीतासन्निधौ निधाय तत्र पात्रान्तरेण हस्तेन वा प्रणीतोदकमासिच्य पवित्राभ्यामुत्पूय पवित्रे प्रोक्षणीषु निधाय दक्षिणहस्तेन प्रोक्षणीपात्रमुत्थाप्य सव्ये कृत्वा तदुदकं दक्षिणहस्तस्य अनामिकाङ्गुष्ठाभ्यां त्रिरूर्ध्वं क्षिप्त्वा प्रोक्षणीभिरद्भिरासादनक्रमेणैकैकशः प्रोक्ष्य असञ्चरे (प्रणीताग्न्योरन्तराले) प्रोक्षणीपात्रं निदध्यात् ।

घृताच्यसीति आज्यस्थाल्यामासादितमाज्यं चरूँश्च प्रणीतोदकमासिच्य चरुस्थाल्यां निदध्यात् -

**ॐ घृताच्यसि जुहूर्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳसदऽआसीद घृताच्यस्युपभृन्नाम्ना सेदं प्रियेण धाम्ना प्रियꣳसदऽआसीद घृताच्यसि ध्रुवानाम्ना सेदं प्रियेण धाम्ना प्रियꣳसदऽआसीद । ध्रुवाऽअसदन्नृतस्य योनौ ता व्विष्णो पाहि यज्ञं पाहि मां यज्ञन्न्यम् ॥**

ततो ब्रह्मा आज्यं चरुञ्च युगपदग्नावारोप्य ब्रह्माभावे स्वयं यजमानो वा ज्वलदुल्मुकमादाय धृष्टिरसीति मन्त्रेणाऽऽज्यचर्वोः समन्ताद्भ्रामयित्वा अग्नौ क्षिपेत् -

**ॐ धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहि निष्क्रव्यादꣳसेधा देवयजँ वह । ध्रुवमसि पृथिवीन्दृꣳह ब्रह्मवनि त्वा क्षत्रवनि सजातवन्न्युपदधामि भ्रातृव्यस्य व्वधाय ॥**

## (छ) स्रुवसंस्कारः

स्रुचश्च म इति दक्षिणहस्तेन ऋजुं स्रुवमादाय -

**ॐ स्रुचश्च मे चमसाश्च मे व्वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्च मेऽधिषवणे च मे पूतभृच्चम आधवनीयश्च मे व्वेदिश्च मे ब्बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥**

पुनन्तु मेति पूर्वाग्रमधोबिलं स्रुवमग्नौ तापयेत् -

**ॐ पुनतु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्वा भूतानि जातवेदः पुनीहि मा ॥**

ततो वामे पाणावुत्तानबिलं निधाय 'प्रत्युष्टꣳरक्ष' इति दक्षिणहस्तेन सम्मार्जनकुशैः प्रणीतोदकेन स्रुवप्रोक्षणं कुर्यात् -

**ॐ प्रत्युष्टꣳ रक्षः प्रत्युष्टाऽअरातयो निष्टप्तꣳरक्षो निष्टप्ताऽअरातयः । उर्व्वन्तरिक्षमन्वेमि ॥**

तत अनिशितोसीति दक्षिणहस्तधृतं स्रुवं सम्मार्जनकुशानामग्रैर्मूलतोऽग्रपर्यन्तं मूलैरग्रमारभ्य अधस्तान्मूलपर्यन्तं समृज्य[10] -

**ॐ अनिशितोसि सपत्नक्षिद्वाजिनन्त्वा वाजेध्यायै सम्मार्ज्मि ॥**

पुनन्तु मेति पुनः स्रुवं प्रतप्य -

**ॐ पुनतु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु व्विश्वा भूतानि जातवेदः पुनीहि मा ॥**

शन्नो देवीरिति प्रणीतोदकेनाभिषिच्य -

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः ॥**

तत्त्वायामीति पुनः स्रुवं प्रतप्य -

**ॐ तत्त्वायामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो व्वरुणेह बोध्युरुशꣳसमानऽआयुः प्रमोषीः ॥**

तमुत्वेति स्रुवमुदङ्मुखमात्मनो दक्षिणतो कुशोपरि निदध्यात् -

**ॐ तमुत्वा दध्यङ्ङृषिः पुत्रऽईधेऽअथर्वणः । व्वृत्रहणं पुरन्दरम् ॥**

॥ इति स्रुवसंस्कारः ॥

तेजोऽसीति आज्यमुत्थाप्य चरोः पूर्वेण नीत्वा अग्नेरुत्तरतः स्थापयित्वा चरुमुत्थाप्य आज्यस्य पश्चिमतो नीत्वा आज्यस्योत्तरतः स्थापयित्वा आज्यमग्नेः पश्चादानीय स्थापयेत्-

**ॐ तेजोऽसि शुक्रमस्यमृतमसि धामनामासि प्रियन्देवानामनाधृष्टन्देवयजनमसि ॥**

---

१०. कुशको अग्रभागले स्रुवको अग्रभाग मध्यभागले मध्यभाग र मूलभागले मूलभाग सम्मार्जन गर्ने क्रम पनि संस्कारभास्करमा पाइन्छ, तर यहाँ सूत्रको क्रम राखिएको छ ।

तथैव चरुं चानीय पशुभिरित्यग्नेः प्रदक्षिणं कारयित्वा आज्यस्योत्तरतः स्थापयेत्[११] -

**ॐ पशुभिः पशूनाप्नोति पुरोडाशैर्हवी ᳪ ष्या । छन्दोभिः सामिधेनीर्याज्याभिर्वषट्कारान् ॥**

आपवस्वेत्याज्यावेक्षणम् -

**ॐ आपवस्व हिरण्यवदश्ववत्सोम वीरवत् । वाजङ्गोमन्तमा भर स्वाहा ॥**

प्रत्युष्ट ᳪ रक्ष इति पूर्वपवित्राभ्यामाज्येन त्रिरुत्पवनम् -

**ॐ प्रत्युष्ट ᳪ रक्षः प्रत्युष्टाऽअरातयो निष्टप्त ᳪ रक्षो निष्टप्ताऽअरातयः । उर्व्वन्तरिक्षमन्वेमि ॥**

आत्वा हार्षमिति अपद्रव्यनिरीक्षणम् -

**ॐ आत्वा हार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलिः । विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्द्राष्ट्रमधिभ्रशत् ॥**

विष्णोरराटमिति द्वे पवित्रे आज्ये चरौ च निदध्यात् -

**ॐ विष्णोरराटमसि विष्णोः श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवोसि । वैष्णवमसि विष्णवेत्वा ॥**

देवस्य त्वेति प्रोक्षणीपात्रस्थपवित्राभ्यां पूर्ववत् प्रोक्षणीमुत्पूय तेनाऽऽसादितवस्तुसेचनम् -

**ॐ देवस्य त्वा सवितुः प्प्रसवेश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । अग्नीषोमाभ्यान्त्वा जुष्टं नियुनज्मि । अद्भ्यस्त्वौषधीभ्योऽनुत्वा माता मन्यतामनु पितानुब्भ्राता सगब्भ्र्योऽनुसखा सयूथ्यः । अग्नीषोमाभ्यान्त्वा जुष्टम्प्रोक्षामि ॥**

धृष्टिरसीति ज्वलदुल्मुकमाज्यचर्वोरुपरि समन्तात् प्रदक्षिणक्रमेण भ्रामयित्वाऽग्नौ क्षिपेत् -

**ॐ धृष्टिरस्यपाग्नेऽअग्निमामादञ्जहि निष्क्रव्याद ᳪ सेधा देवयजँ वह । ध्रुवमसि पृथिवीन्दृ ᳪ ह ब्ब्रह्मवनि त्वा क्षत्रवनि सजातवन्युपदधामि भ्रातृव्यस्य व्वधाय ॥**

---

११. चरु ल्याएर घिउको उत्तरतिर राख्नू ।

## (ज) ब्रह्मविष्णुप्रजापतीनां पूजनम्

तत्रादौ अर्घ्यं संस्थाप्य 'आब्रह्मन्' इति ब्रह्मार्चनं कुर्यात् -

**ॐ आब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम्** ॥

इदं विष्णुरिति विष्ण्वर्चनम् -

**ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा** ॥

प्रजापतेनेति प्रजापतिपूजनम् -

**ॐ प्रजापते न त्वदेतान्यन्यो व्विश्वारूपाणि परिता बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वयꣳस्याम पतयो रयीणाम्** ॥

हिरण्यगर्भ इति हिरण्यं निदध्यात् -

**ॐ हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । सदाधार पृथिवीन्द्यामुते माङ्कस्मै देवाय हविषा विधेम** ॥

## (झ) अग्निपूजनम्

तदेवाग्निरित्यग्निमर्चयेत् -

**ॐ तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः । तदेव शुक्रं तद्ब्रह्मताऽआपः स प्रजापतिः** ॥

ततः पूर्वस्थापितसमिधस्तिस्रो विहाय अपरसमिदाधानम् -

**ॐ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन** ॥

तत अग्नावेव पूर्वादिप्रदक्षिणक्रमेण ऋग्वेदादींश्च पूजयेत् ।

तत्र पूर्वे -

**ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥**

**ॐ ऋग्वेदाय नमः ।**

दक्षिणे -

**ॐ इषेत्वोर्जेत्वा व्वायवस्थ देवोवः सविता प्प्रार्पयतु श्रेष्ठतमाय कर्मणऽ आप्यायध्वमघ्न्याऽइन्द्राय भागं प्रजावतीरनमीवाऽअयक्ष्मा मा व्वस्तेनऽईशत माघशꣳसो ध्रुवाऽअस्मिन्गोपतौ स्यात बह् वीर्यजमानस्य पशून्पाहि ॥**

**ॐ यजुर्वेदाय नमः ।**

पश्चिमे -

**ॐ अग्नऽआयाहि व्वीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥**

**ॐ सामवेदाय नमः ।**

उत्तरे -

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शँय्योरभिस्रवन्तु नः ॥**

**ॐ अथर्ववेदाय नमः ।**

आप्यायस्वेति चरुं ब्रह्मणे समर्पयेत् -

**ॐ आप्यायस्व समेतु ते व्विश्वतः सोमव्वृष्ण्यम् । भवा व्वाजस्य सङ्गथे ॥**

ततोऽग्निप्रार्थनम् -

**ॐ नमो यज्ञपुरुष वैश्वानर परमात्मा देवता ब्रह्मा ऋषिः कपिलवर्ण उष्णिक् छन्दो रुद्रो देवता होमे विनियोगः ।**

नारद उवाच -

**ॐ प्राङ्मुखस्तु स्थितो वह्निः प्राङ्मुखा एव ऋत्विजः ।**

**प्राङ्मुखा देवताः सर्वाः कथं प्रत्यङ्मुखो भवेत् ॥**

ब्रह्मोवाच -

**ॐ आवाहयेत्ततो वह्निं मन्त्रपूतेन वारिणा ।**

**अनलश्च जलं दृष्ट्वा भीतः प्रत्यङ्मुखो भवेत् ॥**

नारद उवाच -

**ॐ पावकस्य तु किं रूपं को वर्णः किञ्च लक्षणम् ।**

**शिरोबाहूदराङ्घ्रीणां चक्षुः श्रोत्रमुखस्य च ॥**

ब्रह्मोवाच -

**ॐ पावकं द्विजरूपं च त्रिनेत्रं च चतुर्भुजम् ।**

**त्रिशिखं सप्तजिह्वं च पञ्चलक्षणसंयुतम् ॥**

**त्रिभागं तु मुखं तस्य अधिकं वक्त्रमुच्यते ।**

**उत्तरास्ये स्थितो विष्णुर्दक्षिणास्ये प्रजापतिः ॥**

**मध्यवक्त्रे तु ईशान एवं ब्रह्मप्रभाषितम् ।**

**मूर्ध्नि चैव त्वहं ब्रह्मा मुखे चैव तु शङ्करः ॥**

**जिह्वायां संस्थितो विष्णुर्दंष्ट्रायां च गुहाः स्मृताः ।**

**नासायां देवताः सर्वाश्चक्षुषीन्दुदिवाकरौ ॥**

**ऋग्वेदो हृदयस्थाने बाह्वङ्गुल्योर्यजुस्तथा ।**

**उदरे कटिगुह्ये च सामवेदः प्रकीर्तितः ॥**

**अथर्वा जङ्घपादौ च ग्रीवौङ्कारस्तथैव च ।**

**पृष्ठे चैव तु गायत्री एवं स्यात्तु षडङ्गकम् ॥**

**हरकमल पिङ्गललोचन लोहिताक्षः सर्वपापप्रणाशन** । इति वैश्वानरलक्षणम् ।

कस्य पुत्र, कस्य कुलोत्पन्नः, किं गोत्रम्, कः पिता, का माता इति कात्यायनवचनात् । शृङ्गीगोत्रम्, शाण्डिल्यः पिता, अरणिर्माता, उदानकुक्षिमूर्ध्वमुखललाटम् ।

**ॐ काली कराली च मनोजवा च सुलोहिता चैव सुधूम्रवर्णा ।**
**स्फुलिङ्गिनी विश्वधरा च चण्डी लोलायमाना इति सप्त जिह्वाः ॥**
**त्रिशिखं च चक्रधरं साक्षसूत्रकमण्डलुम् ।**
**व्याघ्रहस्तं दिव्यपुष्पगन्धाभरणभूषितम् ॥**
**अजास्कन्धसमारूढं कृष्णाजिनोत्तरीयकम् ।**
**ऋग्यजुःसामाथर्वाख्यवेदानां ध्वनिभूषितम् ॥**
**होमार्थं प्रार्थयेऽहं त्वां चर्वाज्याभ्यां हुताशन ॥**

(अमुक)कर्मणि (अमुक)नामन् [१२] दिव्यरूप आवाहितो भव । तावत्तिष्ठात्र मे ब्रह्मन् यावत्कर्म

---

१२. **कर्मविशेषे अग्नेर्नामानि**

**वायवीयसंहितायाम् -**

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः । अग्निश्च भरतो नाम गर्भाधाने विधीयते ॥
तथा पुंसवने चैव शुभे कर्मणि शोभनः । सीमन्ते मङ्गलो नाम प्रगल्भो जातकर्मणि ॥
नाम्नि वै पार्थिवो वह्निः प्राशने तु शुचिः स्मृतः । सभ्यनामाथ चूडायां व्रतदाने समुद्भवः ॥
वेदारम्भे हरिर्नाम राजपुत्रः समावृते । गोदाने सूर्यनामा च केशान्ते ह्यग्निरुच्यते ।
वैश्वानरो विसर्गे तु विवाहे योजकस्तथा । चतुर्थीकर्मणि शिखी धृतिरग्निस्तु सामनि ॥
लक्षहोमे वह्निनाम कोटिहोमे हुताशनः । प्रायश्चित्ते विधिर्नाम पाकयज्ञे तु साहसः ॥
पूर्णाहुत्यां मृडो नाम शान्तिके दारुणस्तथा । पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारिके ।
वश्यर्थे कामदो नाम वनदाहे तु वर्धनः । आवसथ्ये भवेदग्निर्होमे तु सम्प्रदायकः ॥
क्रव्यादो मृतभक्षी च समुद्रे वडवानलः । युगान्ते संक्षयो नाम संवर्तः प्रलये स्मृतः ॥ इति ॥

**तथा ग्रन्थान्तरे -**

अग्निश्च भरतो नाम गर्भाधाने विधीयते । तथा पुंसवने चैव सीमन्ते जातकर्मणि ॥
नाम्नि वै पार्थिवो वह्निः प्राशने तु शुचिः स्मृतः । चूडायां मङ्गलो नाम व्रतदाने समुद्भवः ॥
गोदाने सूर्यनामा च विवाहे योजकस्तथा । शान्तिके दारुणो नाम पौष्टिके बलवर्धनः ॥
आवसथ्ये भवेदग्निरग्निष्टोमे प्रदायकः । वनदाहे दूतकाख्यः प्रकोष्ठे जठरः स्मृतः ॥
वायव्ये वरुणो नाम स्थावरे पावको भवेत् । क्रव्यादो मृतदाहे च समुद्रे वडवानलः ॥
युगान्ते चाक्षयो नाम वत्सरे प्रलयं गतः ॥ इति ॥

**वाचस्पतौ -**

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने प्रकीर्तितः ॥
पुंसवे चमसो नाम शोभनः शुभकर्मसु । सीमन्ते ह्यनलो नाम प्रगल्भो जातकर्मणि ॥
पार्थिवो नामकरणे प्राशनेऽन्नस्य वै शुचिः । सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः ॥
गोदाने सूर्यनामा स्यात् केशान्ते याज्ञिकः स्मृतः । वैश्वानरो विसर्गे स्याद् विवाहे बलदः स्मृतः ॥

समाप्यते ।

ॐ चत्वारीति वैश्वानरमन्त्रस्य वामदेव ऋषिस्त्रिष्टुप्छन्दो वैश्वानरो देवता अग्निप्रार्थने विनियोगः ।

**ॐ चत्वारि शृङ्गा त्रयोऽअस्य पादा द्वे शीर्षे सप्तहस्तासोऽअस्य ।**

**त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ२ आविवेश ॥**

॥ इति अग्निप्रार्थनम् ॥

ततो गन्धपुष्पादिभिरग्निं पूजयेत् -

आग्नेये- **ॐ ब्रह्मणे नमः ।**

नैर्ऋत्ये- **ॐ पौष्टिकाय नमः ।**

वायव्ये- **ॐ बलवर्धनाय नमः ।**

ऐशान्ये- **ॐ प्रजापतये नमः ।**

मध्ये- **ॐ विष्णवे नमः ।**

## (ञ) ब्राह्मणवरणम्

तत्रादौ कुशतिलजलयुतगन्धपुष्पाक्षतताम्बूलपूगीफलवस्त्रद्रव्याभरणादीन्यादाय -

हरि ॐ तत्सत् ॐ विष्णुः ३ इत्यादिदेशकालादीन् सङ्कीर्त्य (अमुक) गोत्रः (अमुक) प्रवरः (अमुक)

---

चतुर्थीकर्मणि शिखी धृतिरग्निस्तथापरे । आवसथ्यस्तथाधाने वैश्वदेवे तु पावकः ॥
ब्रह्माग्निर्गार्हपत्ये स्याद् दक्षिणाग्निरथेश्वरः । विष्णुराहवनीये स्यादग्निहोत्रे त्रयो मताः ॥
लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः । एके घृतार्चिषं प्राहुरग्निध्यानपरायणाः ॥
रुद्रादौ तु मृडो नाम शान्तिके शुभकृत्तथा । (आदिशब्दाल्लघुरुद्रशतरुद्रातिरुद्रा लक्ष्यन्ते)
पौष्टिके वरदश्चैव क्रोधाग्निश्चाभिचारिके । वश्यार्थे वशकृत्प्रोक्तो वनदाहे तु पोषकः ॥
उदरे जठरो नाम क्रव्यादः शवभक्षके । समुद्रे वाडवो हयग्निर्लये संवर्तकस्तथा ॥
सप्तविंशतिसंख्याका अग्नयः कर्मसु स्मृताः ॥ इति ॥

शर्मा/वर्मा/गुप्तः/दासः अहं मम करिष्यमाण (अमुक) कर्मणि कृताकृतावेक्षणादि-रूपब्रह्मकर्म कर्तुं तथा च (अमुक) कर्मणि प्रतिदेवतानां मुखे साज्यभागान्तम् आहवनीयद्रव्ययुतहोमकर्म कर्तुं तथा च (अमुक) कर्मणि तत्तत्कर्मविहितोपयोग्याचारकर्म कर्तुं तथा च (अमुक) कर्मणि चतुर्वेदोक्तमन्त्रजप-पाठकर्म कर्तुं नानानामगोत्रान् नानानामशर्मणो ब्राह्मणान् एभिश्चन्दनपुष्पाक्षतताम्बूलपूगीफल-वासोद्रव्याभरणादिभिर्गणपतिब्रह्महोत्राचार्यत्वेन जापकपाठकत्वेन ऋत्विक्त्वेन च युष्मानहं वृणे । ॐ वृताः स्म इति ब्राह्मणाः ब्रूयुः ।

यथा विहितं कर्म कुरुत इति यजमानो ब्रूयात् । करवामः इति ब्राह्मणाः ब्रूयुः ।

अथ ब्रह्मादीनामृत्विजां प्रार्थना -

ब्रह्मप्रार्थना -

**ॐ यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः ।**

**तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम ॥**

होतृप्रार्थना -

**ॐ भगवन् सर्वधर्मज्ञ सर्वधर्मविदां वर ।**

**वितते मम यज्ञेऽस्मिन् होतृत्वं मे मखे कुरु ॥**

आचार्यप्रार्थना -

**ॐ आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ।**

**तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥**

वेदपाठकानां प्रार्थना । पूर्वदिशि ऋग्वेदपारायणार्थम् -

**ॐ ऋग्वेदः पद्मपत्राक्षः गायत्रः सोमदैवतः ।**

**अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥**

दक्षिणदिशि यजुर्वेदपारायणार्थम् -

**ॐ कातराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः**

**काश्यपेयस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥**

पश्चिमदिशि सामवेदपारायणार्थम् -

**ॐ सामवेदस्तु पिङ्गाक्षो जागतः शक्रदैवतः ।**

**भारद्वाजस्तु विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥**

उत्तरदिशि अथर्ववेदपारायणार्थम् -

**ॐ बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः ।**

**वैशम्पायन विप्रेन्द्र ऋत्विक्त्वं मे मखे भव ॥**

**(अमुक) कर्मणि (अमुक) देवताया (अमुक) मन्त्रजपकर्म कर्तुं त्वामहं वृणे** इति जापकांश्च वृणुयात् ।

ततो ब्राह्मणान् मधुपर्कादिना सम्पूज्य प्रार्थयेत् -

**ॐ ब्राह्मणाः सन्तु मे शस्ताः पापात्पान्तु समाहिताः ।**

**वेदानां चैव दातारः पातारः सर्वदेहिनाम् ॥**

**जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ।**

**देवानां च पितॄणां च तृप्त्यर्थं पाठकाः कृताः ॥**

**येषां देहे स्थिताः वेदाः पावयन्ति जगत्त्रयम् ।**

**रक्षन्तु सततं तेऽस्मान् जपयज्ञे व्यवस्थिताः ॥**

**ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।**

**येषां वाक्यामृतेनैव शुद्धचन्ति मलिना जनाः ॥**

**पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ।**

**सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥**

**श्रोत्रियाः सत्यवाचश्च वेदध्यानरताः सदा ।**

**यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥**

**अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः ।**

**यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ॥**

**यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ।**

**मम यज्ञे सदा पूज्याः सन्तु वै नियमान्विताः ॥**

**अक्रोधनास्तथा नित्यं प्रसन्नमनसः सदा ।**

**अदुष्टभाषिणः सन्तु मा सन्तु परनिन्दकाः ॥**

**ममापि नियमा ह्येते भवन्तु भवतामपि ॥**

॥ इति ब्राह्मणप्रार्थना ॥

## (ट) पुण्याहवाचनम्

गन्धपुष्पअक्षतताम्बूलपूगीफलद्रव्यवस्त्रादिभिस्त्रीँश्चतुरः पञ्च वा अविधुरान् ब्राह्मणान् सम्पूज्य हस्ते फलादिकं गृहीत्वा -

ॐ तत्सत् ॐ विष्णुरित्यादि देशकालौ स्मृत्वा अद्येह (अमुक) गोत्रस्य (अमुक) शर्मणो/वर्मणो/गुप्तस्य/दासस्य मम गृहे करिष्यमाण (अमुक) कर्मणि **भो ब्राह्मणाः ! ॐ पुण्याहं भवन्तो ब्रुवन्तु** इति त्रिः श्रावयेत् । ते च **ॐ पुण्याहम्** इति त्रिः प्रतिवचनं ब्रूयुः ।

**ॐ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वाभूतानि जातवेदः पुनीहि मा ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ स्वस्ति भवन्तो ब्रुवन्तु** इति त्रिः श्रावयेत् । **ॐ स्वस्तिः** इति त्रिः प्रतिवचनम् ।

**ॐ स्वस्तिनऽइन्द्रो व्वृद्धश्रवाः स्वस्तिनः पूषा व्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ ऋद्धिं भवन्तो ब्रुवन्तु** इति त्रिः । **ॐ ऋद्धिः** इति त्रिः प्रतिवचनम् ।

**ॐ सत्रस्य ऋद्धिरस्य गन्मज्योतिरमृताऽअभूम । दिवं पृथिव्याऽअध्यारुहामा व्विदाम देवान्त्स्वर्ज्ज्योतिः ॥**

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ वृद्धिं भवन्तो ब्रुवन्तु** इति त्रिः । **ॐ वृद्धिः** इति त्रिः प्रतिवचनम् ।

**ॐ ज्यैष्ठचञ्च मऽआधिपत्यञ्च मे मन्युश्च मे भामश्च मेऽमश्च मेऽम्भश्च मे जेमा च मे महिमा च मे व्वरिमा च मे प्रथिमा च मे व्वर्षिमा च मे द्राघिमा च मे व्वृद्धञ्च मे व्वृद्धिश्च मे यज्ञेन कल्पन्ताम्** ॥

पुनः पूर्ववत् ॐ अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ कल्याणं भवन्तो ब्रुवन्तु** इति त्रिः । **ॐ कल्याणम्** इति त्रिः प्रतिवचनम् ।

**ॐ यथेमां व्वाचङ्कल्याणीमावदानि जनेब्भ्यः । ब्रह्मराजन्याभ्याꣳशूद्राय चार्य्याय च स्वाय चारणाय च । प्प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्धचतामुपमादो नमतु** ॥

पुनः पूर्ववत् अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ शान्तिं भवन्तो ब्रुवन्तु** इति त्रिः । **ॐ शान्तिः** इति त्रिः प्रतिवचनम् ।

**ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि** ॥

पुनः पूर्ववत् अद्येहेत्याद्युच्चार्य- **भो ब्राह्मणाः ! ॐ श्रियं भवन्तो ब्रुवन्तु** इति त्रिः । **ॐ श्रीः** इति त्रिः प्रतिवचनम् ।

**ॐ मनसः काममाकूतिं वाचः सत्यमशीय । पशूनाꣳरूपमन्नस्य रसो यशः श्रीः श्रयताम्** ॥

॥ इति पुण्याहवाचनम् ॥

## (ठ) दीपपूजा

तत्र स्थिरो भवेति दीपं प्रज्वालयेत् -

**ॐ स्थिरो भव वीड्वङ्गऽआशुर्भव वाज्यर्वन् । पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहणः** ॥

पृष्टो दिवीति पूजनम् -

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्याम्पृष्टो व्विश्वाऽओषधीराविवेश। वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम्॥**

इति पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत् -

**ॐ शुभं भवतु कल्याणमारोग्यं सुखसम्पदः।**

**सर्वशत्रुविनाशाय दीपज्योतिर्नमोऽस्तु ते॥**

(ड) कलशपूजा

तत्र वेद्या ईशानदिग्भागे अव्रणं दध्यक्षतादिभूषितं कलशं धान्योपरि स्थापयित्वा पूजयेत्, तत्प्रकारश्च यथा -

भूरसीति भूमिशोधनम् -

**ॐ भूरसि भूमिरस्यदितिरसि व्विश्वधाया व्विश्वस्य भुवनस्य धर्त्री। पृथिवीं यच्छ पृथिवीन्दृꣳह पृथिवीम्मा हिꣳसीः।**

धान्यमसीति धान्यं स्थापयेत् -

**ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा। दीर्घामनु प्रसितिमायुषे धान्देवोवः सविता हिरण्यपाणिः प्रतिगृब्भ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोऽसि॥**

आजिघ्रकलशमिति धान्योपरि अव्रणं कलशं स्थापयेत् -

**ॐ आजिघ्र कलशं मह्या त्वा व्विशन्त्विन्दवः। पुनरूर्ज्जा निवर्तस्व सा नः सहस्रन्धुक्ष्वोरुधारा पयस्वती पुनर्म्मा विशताद्रयिः॥**

वरुणस्योत्तम्भनमसीति कलशे तीर्थादिजलं प्रक्षिपेत् -

**ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद ॥**

याऽओषधीरिति सर्वौषधीः प्रक्षिपेत् -

**ॐ याऽओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरा । मनैनु ब्बभ्रूणामहꣳशतन्धामानि सप्त च ॥**

हिरण्यगर्भ इति पञ्चरत्नानि -

**ॐ हिरण्यगर्भः समवर्तताग्ग्रे भूतस्य जातः पतिरेकऽआसीत् । सदाधार पृथिवीन्द्यामुते माङ् कस्मै देवाय हविषा व्विधेम ॥**

याः फलिनीरिति फलादीनि -

**ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्प्रसूतास्तानो मुञ्चन्त्वꣳहसः ॥**

ओषधय इति यवान् -

**ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तꣳराजन्पारयामसि ॥**

गन्धद्वारामिति चन्दनम् -

**ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥**

काण्डात्काण्डादिति दूर्वाङ्कुरान् -

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

स्योना पृथिवीति सप्तमृत्तिकाः -

**ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः ॥**

अश्वत्थेव इति पञ्चपल्लवैस्तन्मुखमाच्छादयेत् -

**ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥**

बृहस्पतेऽअतीति वस्त्रयुग्मेन कलशं वेष्टयेत् -

**ॐ बृहस्पतेऽअतियदर्य्योऽअर्हाद्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्प्रजात तदस्मासु द्रविणन्धेहिचित्रम् । उपयामगृहीतोसि बृहस्पतये त्वैषते योनिर्बृहस्पतये त्वा ॥**

अम्बेऽअम्बिक इति आम्रपल्लवैस्तन्मुखमाच्छादयेत् -

**ॐ अम्बेऽअम्बिकेऽम्बालिके न मा नयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥**

तत्त्वा यामीति कलशे वरुणमावाह्य पाद्यादिभिरुपचारैः पूजयेत् -

**ॐ तत्त्वा यामि ब्ब्रह्मणा व्वन्दमानस्तदाशास्ते यजमानो हविर्ब्भिः । अहेडमानो वरुणेह बोध्यरुशꣳसमानऽआयुः प्रमोषीः ॥**

ततः कलशे गङ्गादितीर्थान्यावाहयेत् -

**ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ॥**

कलशं स्पृष्ट्वाभिमन्त्रयेत् -

**ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ।**

**मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥**

**कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा ।**

**ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ॥**

**अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥**

ततः कलशप्रार्थना -

**ॐ देवदानवसंवादे मथ्यमाने महोदधौ ।**

**उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ॥**

**त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः ।**

**त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठताः ॥**

**शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।**

**आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥**

**त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ।**

**त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ॥**

**सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ॥**

**ॐ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ।**

**सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥**

## (ढ) गणेशपूजा

हस्ते कुशयवजलान्यादाय सङ्कल्पः -

ॐ अद्येहेत्यादि करिष्यमाण (अमुक) कर्म निर्विघ्नतया परिसमाप्त्यर्थम् (अमुक) कर्माङ्गतया गणेशपूजनमहं करिष्ये ।

इति सङ्कल्प्य "गणानान्त्वा", "हे हेरम्ब" इत्यादिमन्त्रैरावाहयेत् -

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्रियाणान्त्वा प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसो मम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधम् ॥**

**ॐ हे हेरम्ब त्वमेहयेहि अम्बिकात्र्यम्बकात्मज ।**

**सिद्धिबुद्धिपते त्र्यक्ष लक्ष्यलाभयितः पितः ॥**

**नागास्य नागहार त्वं गणराज चतुर्भुज ।**

**भूषितैः स्वायुधैर्दिव्यैः पाशाङ्कुशपरस्वधैः ॥**

**आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ।**

**इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष माम् ॥** इत्यावाह्य

ॐ भूर्भुवःस्वः सिद्धिबुद्धिसहिताय साङ्गाय सायुधाय सवाहनाय सपरिवाराय श्रीमन्महागणाधिपतये नमः, इदमासनं समर्पयामि ।

ततः सहस्रशीर्षेत्यादिषोडशमन्त्रैः षोडशोपचारैः पूजयेत्, तद्यथा -

आसनम्, पाद्यम्, अर्घ्यम्, आचमनीयम्, पञ्चामृतम्, शुद्धोदकम्, यज्ञोपवीतम्, वस्त्रम्, अलङ्कारादियल्लब्धम्, चन्दनम्, दूर्वा, अक्षताः, धूपः, दीपः, नैवेद्यम्, आचमनीयम्, ताम्बूलम्, दक्षिणाद्रव्यम्, पादवन्दनम् । एभिः सम्पूज्य नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कुर्यात् -

**ॐ रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक ।**

**भक्तानामभयं कर्ता त्राता भव भवार्णवात् ॥**

**द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो ।**

**वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥**

**इदं फलं प्रियं तुभ्यं अर्पयामि गणाधिप ।**

**अनेन फलदानेन फलदोऽस्तु सदा मम ॥**

**वक्रतुण्ड महाकाय कोटिसूर्य समप्रभ ।**

**अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ॥**

**ॐ विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय ।**

**नागाननाय श्रुतियज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥**

## (ण) रक्षाबन्धनपूजा

यव-कुश-दूर्वा-सर्षप-चन्दन-गोमय-हरिद्रा-दधिसहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन् नारायणकवचं पठेत् -

**ॐ पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः ।**

**याम्यां रक्षतु वाराहो नारसिंहस्तु नैर्ॠते ॥**

**वारुण्यां केशवो रक्षेद् वायव्यां मधुसूदनः ।**

**उत्तरे श्रीधरो रक्षेदधस्तात्तु महीधरः ॥**

**एवं दशदिशो रक्षेद् वासुदेवो जनार्दनः ।**

**यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे वै पद्ममुत्तमम् ॥**

**वामपार्श्वे गदा रक्षेद् दक्षिणे तु सुदर्शनः ।**

**उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः ॥**

**ऋग्वेदमच्युतो रक्षेद्यजुर्वेदमधोक्षजः ।**

**कृष्णो रक्षतु सामानमथर्वाणञ्च माधवः ॥**

**उपविष्टाँश्च विप्राँस्ताननिरुद्धोऽभिरक्षतु ।**

**यजमानं सपत्नीकं पुण्डरीकाक्ष एव तु ॥**

**रक्षाहीनं तु यत्स्थानं तत्सर्वं रक्षताद्धरिः ।**

**वेदमन्त्रैश्च कर्तव्या रक्षा शुभ्रैस्तु सर्षपैः ॥**

**कृत्वा पोटलिकां पूर्वं बध्नीयाद्दक्षिणे करे ॥**

ततो वक्ष्यमाणमन्त्रैः रक्षासूत्रं पूजयेत् -

**ॐ रक्षोहणं व्वलगहनं व्वैष्णवीमिदमहन्तं व्वलगमुत्किरामि यम्मे निष्ट्यो यममात्यो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे समानो यमसमानो निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तं व्वलगमुत्किरामि यम्मे सजातो यमसजातो निचखानोत्कृत्याङ्किरामि ॥**

**ॐ स्वराडसि सपत्नहा सत्रराडस्यभिमातिहा जनराडसि रक्षोहा सर्वराडस्यमित्रहा ॥**

**ॐ रक्षोहणो वो व्वलगहनः प्रोक्षामि वैष्णवान्रक्षोहणो वो व्वलगहनोऽवनयामि वैष्णवान्रक्षोहणो वो व्वलगहनोऽवस्तृणामि वैष्णवान्रक्षोहणौ वां व्वलगहनाऽउपदधामि व्वैष्णवी रक्षोहणौ वां व्वलगहनौ पर्य्यूहामि व्वैष्णवी व्वैष्णवमसि व्वैष्णवास्थ ॥**

**ॐ सप्तऽऋषयः प्रतिहिताः शरीरे सप्त रक्षन्ति सदमप्रमादम् । सप्तापः स्वपतो लोकमीयुस्तत्र जागृतोऽअस्वप्नजौ सत्रसदौ च देवौ ॥**

॥ इति रक्षाबन्धनपूजा ॥

ततः कलशस्कन्धप्रदेशे पूजनम् -

ॐ गणपतिसूर्यदेवीशिवविष्णून्, विनायकदुर्गावाय्वाकाशाश्विनीकुमारान्, सूर्यसोमभौमबुधबृहस्पतिशुक्रशनिराहुकेतून्, ईश्वरोमास्कन्दहरिब्रह्मेन्द्रयमकालचित्रगुप्तान्, अग्निअप्भूमिविष्णु-इन्द्रेन्द्राणीप्रजापतिसर्पब्रह्मणः, इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तान्, ध्रुवाद्यष्टवसून्, धात्रादिद्वादशादित्यान्, वीरभद्राद्येकादशरुद्रान्, गौर्यादिषोडशमातृः, आवहादिसप्तमरुतः, विनायकब्रह्मविष्णुरुद्रार्कवनस्पतीन्, आत्मन इष्टदेवताः कुलदेवताश्च, ग्रामदेवताः, स्थानदेवताश्चावाह्य यथामिलितोपचारैः (पञ्चोपचारैः षोडशोपचारैर्वा) पूजयेत् ।

## (त) होमसङ्कल्पः

कुशादिकमादाय -

ॐ तत्सत् ॐ विष्णुः ३ इत्यादिदेशकालादीन् सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) प्रवरस्य

(अमुक)शाखान्तर्गत (अमुक)वेदाध्यायिनो (अमुक)शर्मणो/वर्मणो/गुप्तस्य/दासस्य मम (अमुक) कर्मणि आघाराज्यभागपञ्चवारुणिहोमपूर्वकप्रधानभूतेभ्यो देवेभ्यो गणपत्यादिपञ्चायतनेभ्यो विनायकादिपञ्चलोकपालेभ्यः सूर्यादिनवग्रहेभ्य ईश्वराद्यधिदेवेभ्योऽग्न्यादिप्रत्यधिदेवेभ्य इन्द्रादिदशदिकपालेभ्यो ध्रुवाद्यष्टवसुभ्यो धात्रादिद्वादशादित्येभ्यो वीरभद्राद्येकादशरुद्रेभ्यो गौर्यादिषोडशमातृभ्य आवहादिसप्तमरुद्भ्यो विनायकब्रह्मविष्णुरुद्रार्कवनस्पतिभ्यः प्रधानदेवेभ्यः तथा चतुःस्वस्तिभ्यः पयःपञ्चभ्यः षड्विष्णुभ्यो द्वादशदेवताभ्यो द्वादशशान्तिभ्यः षट्प्रातर्भ्यः षड्वातेभ्यस्त्र्यनडुद्भ्यः पञ्चभगेभ्यः पञ्चेन्द्रियेभ्यः पञ्चवरुणेभ्यो गायत्र्यै सावित्र्यै सरस्वत्यै गृहमात्रेऽन्नपूर्णायै महालक्ष्म्यै महारिष्टविनाशिन्यै चण्डचै द्यौराल्यै वास्तुदेवाय भूमिदेवाय गैडुदेवाय क्षेत्रपालाय ग्रामदेवाय स्वर्गेन्द्राय पातालवासुकिभ्यो मित्रलोकपालाय मान्धात्रे तीर्थराजाय वृतराजाय पुनर्दिक्पालेभ्यस्तिथिभ्यो नक्षत्रेभ्यो वारेभ्यः करणेभ्यो वातेभ्यो मेघेभ्यः समुद्रेभ्यो नदीभ्य इष्टदेवेभ्यः कुलदेवेभ्यः स्थापितदेवेभ्यो भैरवाय भैरव्यै विन्ध्यवासिन्यै स्थानविशेषाधिपतिदेवताभ्यः सर्वदेवेभ्यः सर्वहोमपूरणार्थेभ्यः पञ्चपाण्डवेभ्यो भीमसेनाय पितृभ्यो वैश्वानराय तथोत्तराङ्गत्वेन भूर्भुवःस्वः अग्निवरुणसवितृविष्णुविश्वेदेवमरुत्स्वर्क-प्रजापतिस्विष्टकृद्देवेभ्यश्च इदमाज्यादिद्रव्यहोमं यथासंख्येन ब्राह्मणद्वारा अहं करिष्ये ।

॥ इति होमसङ्कल्पः ॥

ततः उपयमनकुशान् वामहस्ते कृत्वोत्तिष्ठन् प्रजापतिं मनसा ध्यायन् समिद्धतमेऽग्नौ समिधाग्निमिति पूर्वस्थापितास्तिस्रः समिधः प्रक्षिपेत् -

**ॐ समिधाग्निन्दुवस्यत घृतैर्बोधयतातिथिम् । आस्मिन्हव्या जुहोतन ॥**

उपविश्य, पृष्टो दिवीति मन्त्रेण दक्षिणचुलुकेन सपवित्रं प्रोक्षण्युदकमादाय -

**ॐ पृष्टो दिवि पृष्टोऽअग्निः पृथिव्यां पृष्टो विश्वाऽओषधीराविवेश । वैश्वानरः सहसा पृष्टोऽअग्निः स नो दिवा सरिषस्पातु नक्तम् ॥**

सुसमिद्धायेति मन्त्रेण तज्जलेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्य -

**ॐ सुसमिद्धाय शोचिषे घृतन्तीव्र्ञ्जुहोतन । अग्नये जातवेदसे ॥**

पातितदक्षिणजानुः कुशेन ब्रह्मणान्वारब्धः समिद्धतमेऽग्नौ[१३] स्रुवेणाज्याहुतीर्जुहोति, तत्र आघारादारभ्य द्वादशाहुतिषु तत्तदाहुत्यनन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः ।

## (थ) प्रजापत्यादिवनस्पत्यन्तहोमः

ॐ प्रजापतय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः ।

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम** । (मनसा) प्रोक्षणीपात्रेऽपि ।

ॐ इन्द्रायेति प्रजापतिऋषिस्त्रिष्टुप्छन्द इन्द्रो देवता आज्यहोमे विनियोगः ।

**ॐ इन्द्राय स्वाहा । इदमिन्द्राय न मम** । (इति आघारौ) प्रोक्षणीपात्रेऽपि ।

ॐ अग्नय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः ।

**ॐ अग्नये स्वाहा । इदमग्नये न मम** । प्रोक्षणीपात्रेऽपि ।

ॐ सोमायेति प्रजापतिऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः ।

**ॐ सोमाय स्वाहा । इदं सोमाय न मम** । (इति आज्यभागौ) प्रोक्षणीपात्रेऽपि ।

ॐ भूर्भुवः स्वरिति महाव्याहृतीनां प्रजापतिऋषिरग्निवायुसूर्या देवता गायत्र्युष्णिगनुष्टुभश्छदांसि अग्न्याधाने विनियोगः ।

---

१३. **होमे श्रुवधारणप्रकारः -**

अग्रे धृतोऽर्थनाशः स्यान्मध्ये चैव मृतप्रजा । मूले च म्रियते होता स्रुवस्तु कुत्र धार्यते ॥

अग्रमध्याच्च यन्मध्यं मूलमध्याच्च मध्यतः । स्रुवं धारयते विद्वान् ज्ञातव्यं च सदा बुधैः ॥

तर्जनीं च बहिः कृत्वा कनिष्ठां च बहिस्ततः । मध्यमानामिकाङ्गुष्ठैः स्रुवं धारयते द्विजः ॥

आहुतिप्रदानस्थलविचारः -

आस्यान्तर्जुहुयाद् वह्नेः पण्डितः सर्वकर्मसु । बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात् ॥

नासिकायां मनः पीडा शिरो होमे तु मृत्युदः ॥

**अङ्गज्ञानञ्चाह -**

यत्र काष्ठं तत्र श्रोत्रं यत्र धूमोऽथ नासिका । यत्राल्पज्वलनं नेत्रं यतो भस्म ततः शिरः ॥

यत्र प्रज्वलितो वह्निस्तन्मुखं जातवेदसः । घृतधारास्ततो दद्याद् यावत् स्विन्नो भवेच्चरुः ॥

**अन्यत्र च -**

“अदीप्तेऽग्नौ हतो होमः” इति ।

**ॐ भूः स्वाहा । इदमग्नये न मम ।** प्रोक्षणीपात्रेऽपि ।

**ॐ भुवः स्वाहा । इदं वायवे न मम ।** प्रोक्षणीपात्रेऽपि ।

**ॐ स्वः स्वाहा । इदं सूर्याय न मम ।** प्रोक्षणीपात्रेऽपि । एता महाव्याहृतयः ।

पञ्चवारुणिहोमः –

ॐ त्वन्नोऽअग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते प्रायश्चित्तहोमे विनियोगः ।

**ॐ त्वन्नोऽअग्ने व्वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसीष्ठाः । यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषाꣳसि प्रमुमुग्ध्यस्मत् स्वाहा ॥**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ सत्वन्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दः अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

**ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुणꣳरराणो व्वीहि मृडीकꣳसुहवोनऽएधि स्वाहा ॥**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ अयाश्चाग्न इति वामदेव ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता प्रायश्चित्तहोमे विनियोगः ।

**ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्त्वमयाऽअसि । अया नो यज्ञं व्वहास्यया नो धेहि भेषजꣳस्वाहा ॥**

इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ ये ते शतमिति वामदेव ऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवता प्रायश्चित्तहोमे विनियोगः ।

**ॐ ये ते शतं व्वरुणं ये सहस्रं यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा ॥**

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम । प्रोक्षणीपात्रेऽपि ।

ॐ उदुत्तममिति शुनःशेप ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता पाशान्मोचने विनियोगः ।

**ॐ उदुत्तमं व्वरुण पाशमस्मदवाधमं व्विमध्यमꣳश्रथाय । अथा व्वयमादित्यव्रते तवानागसोऽअदितये स्याम स्वाहा ॥**

इदं वरुणाय न मम । प्रोक्षणीपात्रेऽपि । एताः प्रायश्चित्तसंज्ञकाः ।

॥ इति पञ्चवारुणिहोमः ॥

प्रधानदेवताहोमः [१४]

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसोमम । आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधꣳस्वाहा ॥**

---

१४. **अथ प्रधानदेवताहोमसूत्राणि**

गणेशो भास्करो देवी शिवो विष्णुश्च पञ्चमः । पञ्चायतननामानि कथिताः पञ्चदेवताः ॥१॥
विनायकस्तथा दुर्गा वायुराकाश एव च । नासत्यौ चेति पञ्चैते लोकपाला प्रकीर्तिताः ॥२॥
सूर्यः सोमश्च भौमश्च बुधो जीवश्च भार्गवः । शनी राहुश्च केतुश्च कथिताश्च नवग्रहाः ॥३॥
ईश्वरश्च उमा स्कन्दो विष्णुर्ब्रह्मा शचीपतिः । यमः कालश्चित्रगुप्त इत्येता अधिदेवताः ॥४॥
अग्निरापो धरा विष्णुरिन्द्र ऐन्द्री प्रजापतिः । सर्पा व्रह्मा क्रमात् प्रोक्ता नव प्रत्यधिदेवताः ॥५॥
इन्द्राग्नी यमनिर्ऋती वरुणो मरुतो विधुः । ईशो ब्रह्मा तथानन्तो दिक्पालाः दश कीर्तिताः ॥६॥
ध्रुवाद्यष्टवसुर्ज्ञेयो धात्रादित्यास्तु द्वादश । वीरभद्राद्येकादश गौर्यादिमातृषोडश ॥७॥
आवहादिमरुत्सप्त विनायकविधी हरिः । रुद्रश्चार्कस्तथा प्रोक्तो वनस्पतिः क्रमेण हि ॥८॥
चतुःस्वस्तिः पयःपञ्च षड्विष्णुर्देव द्वादश । शान्तिर्द्वादश षट्प्रातः षड्वातास्तु क्रमेण हि ॥९॥
अनडुत्संज्ञको ज्ञेयो होमकर्मणि वै ध्रुवम् । पञ्चभगेन्द्रियाः पञ्च वरुणाः पञ्च एव च ॥१०॥
गायत्री चैव सावित्री वाग्देवी गृहमातृकाः । अन्नपूर्णा महालक्ष्मी महारिष्टविनाशिनी ॥११॥
चण्डी द्यौराली विज्ञेया वास्तुभूम्यस्तथैव च । गैडुश्च क्षेत्रपालश्च ग्रामदेवास्ततः परम् ॥१२॥
स्वर्गेन्द्रो वासुकिश्चैव मित्रलोकस्तथैव च । मान्धाता तीर्थराजश्च व्रतराजस्ततः परम् ॥१३॥
पुनर्दिक्पालका ज्ञेयास्तिथिनक्षत्रयोगकाः । वारश्च करणश्चैव वायुमेघसमुद्रकाः ॥१४॥
नदीष्टकुलदेवाश्च स्थापिता देवताः क्रमात् । भैरवो भैरवी विन्ध्यवासिनी स्थानदेवताः ॥१५॥
एषोह सर्वदेवाश्च शुक्रज्योतिस्तथैव च । पाण्डवाः पितरश्चैव वैश्वानरः क्रमेण च ॥१६॥
पूर्णपात्रं ततो दद्याद् बर्हिर्होमस्ततः परम् । गोभूरत्नहिरण्यादि-रौप्यवस्त्राणि चैव हि ॥१७॥
देयानि द्विजमुख्येभ्यो यजमानै र्विशेषतः ॥ इति होमसूत्राणि ॥

**चरुहोमे मुद्राविचार-**

तिस्रो मुद्रास्तु सम्प्रोक्ता मृगी हंसी च सूकरी । सूकरी करसङ्कोचाद् हंसी मुक्तकनिष्ठिका ॥

कनिष्ठातर्जनीहीना मृगी मुद्रा तिलाहुतौ । शान्तिकर्मणि सर्वत्र मृगी हंसी शुभे उभे ॥

अभिचारेषु सर्वेषु सूकरी तु प्रकीर्तिता ॥

इदं गणपतये न मम ।

**ॐ आकृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥**

इदं सूर्याय न मम ।

**ॐ देवीर्द्वारऽइन्द्रꣳसङ्घाते व्वीड्वीर्षामन्नवर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवतां पार्वाणꣳरेणुककाटन्नुदन्ताँ व्वसुवने व्वसुधेयस्य व्यन्तु यज स्वाहा ।**

इदं देव्यै न मम ।

**ॐ नमः शम्भवाय च मयो भवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च स्वाहा ।**

इदं शिवाय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोसिव्वैष्णवमसि व्विष्णवेत्वा स्वाहा ।**

इदं विष्णवे न मम ।

॥ इति पञ्चायतनाः ॥

लोकपालाः –

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसोमम । आहमजानि गर्ब्भधमात्वमजासि गर्ब्भधꣳस्वाहा ॥**

इदं विनायकाय न मम ।

**ॐअम्बेऽअम्बिकेम्बालिके न मानयति कश्चन ।ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीꣳस्वाहा ॥**

इदं दुर्गायै न मम ।

**ॐ व्वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ॥**

इदं वायवे न मम ।

**ॐ ऊर्ध्वाऽअस्य समिधो भवन्त्यूर्ध्वा शुक्रा शोचीꣳष्यग्नेः । द्युमत्तमाः सुप्रतीकस्य सूनोः स्वाहा ।**

इदमाकाशाय न मम ।

**ॐ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन व्वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण ब्बलाय श्रियै यशसेभिषिञ्चामि स्वाहा ।**

इदमश्विनीकुमाराभ्यां न मम ।

॥ इति पञ्च लोकपालाः ॥

नवग्रहाः –

**ॐ आकृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् स्वाहा ॥**

इदं सूर्याय न मम ।

**ॐ इमन्देवाऽअसपत्नꣳसुवध्वम्महते क्षत्राय महते ज्यैष्ठ्याय महते जानराज्यायेन्द्रस्येन्द्रियाय । इमममुष्य पुत्रममुष्यै पुत्रमस्यै व्विशऽएषवोऽमी राजा सोमोऽस्माकं ब्राह्मणानाꣳराजा स्वाहा ॥**

इदं सोमाय न मम ।

**ॐ अग्निर्म्मूर्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाꣳरेताꣳसि जिन्वति स्वाहा ॥**

इदं भौमाय न मम ।

**ॐ उद्बुध्यस्वाग्ने प्रतिजागृहित्वमिष्टापूर्ते सꣳसृजेथामयञ्च । अस्मिन्त्सधस्थेऽअध्युत्तरस्मिन् व्विश्वेदेवा यजमानश्च सीदत स्वाहा ॥**

इदं बुधाय न मम ।

**ॐ ब्बृहस्पतेऽअति यदर्य्योऽअर्हाद्द्युमद्विभाति क्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजा ततदस्मासु द्रविणन्धेहि चित्रम् । उपयामगृहीतोऽसि ब्बृहस्पतये त्वैषते योनिर्ब्बृहस्पतयेत्वा स्वाहा ॥**

इदं बृहस्पतये न मम ।

**ॐ अन्नात्परिस्रुतो रसम्ब्ब्रह्मणा व्यपिबत्क्षत्रं पयः सोमम्प्रजापतिः । ऋतेन सत्यमिन्द्रियँ व्विपानꣳशुक्रमन्धसऽइन्द्रस्येन्द्रियमिदं पयोमृतम्मधु स्वाहा ॥**

इदं शुक्राय न मम ।

**ॐ शन्नो देवीरभिष्टयऽआपो भवन्तु पीतये । शँयोरभिस्रवन्तुनः स्वाहा ॥**

इदं शनैश्चराय न मम ।

**ॐ कया नश्चित्रऽआभुवदूती सदावृधः सखा । कया शचिष्ठया वृता स्वाहा ॥**

इदं राहवे न मम ।

**ॐ केतुङ्कृण्वन्नकेतवे पेशो मर्याऽअपेशसे । समुषद्भिरजायथाः स्वाहा ।**

इदं केतुभ्यो न मम ॥

॥ इति नवग्रहाः ॥

अधिदेवताः –

**ॐ त्र्यम्बकँ यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्व्वारुकमिव ब्बन्धनान्मृत्योर्मुक्षीय मामृतात् स्वाहा ॥**

इदमीश्वराय न मम । अत्र प्रणीतोदकस्पर्शः [१५]

**ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्व्यात्तम् । इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽ इषाण स्वाहा ॥**

इदमुमायै न मम ।

**ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवा पुरीषात् । श्येनस्य पक्षा हरिणस्य ब्बाहूऽउपस्तुत्यम्महि जातन्तेऽअर्वन् स्वाहा ॥**

इदं स्कन्दाय न मम ।

**ॐ व्विष्णो रराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि । व्विष्णोर्ध्रुवोसि व्वैष्णवमसि व्विष्णवेत्वा स्वाहा ॥**

इदं विष्णवे न मम ।

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः । स बुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः स्वाहा ॥**

१५. रौद्रमासुरमाभिचारणिकं च मन्त्रमुक्त्वा पित्र्यम्, आत्मानं च आलभ्य उपस्पृशेदपः इति का० श्रौ० सू० वचनात् ।

इदं ब्रह्मणे न मम ।

**ॐ त्रातारमिन्द्रमवितारमिन्द्र॑ँहवे हवे सुहव॑ँशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳस्वस्ति नो मघवा धात्विन्द्रः स्वाहा ॥**

इदमिन्द्राय न मम ।

**ॐ यमायत्वा मखायत्वा सूर्यस्यत्वा तपसे । देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि । अर्च्चिरसि शोचिरसि तपोऽसि स्वाहा ॥**

इदं यमाय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ कार्षिरसि समुद्रस्य त्वा क्षित्याऽउन्नयामि ।**

**समापोऽअद्भिरग्मत समोषधीभिरोषधीः स्वाहा ॥**

इदं कालाय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ इन्धानास्त्वा शत॑ँहिमा द्युमन्त॑ँसमिधीमहि । वयस्वन्तो वयस्कृत॑ँ सहस्वन्तः सहस्कृतम् । अग्ने सपत्नदम्भनमदब्धासोऽअदाभ्यम् । चित्रावसो स्वस्तिते पारमशीय स्वाहा ॥**

इदं चित्रगुप्ताय न मम । अत्र प्रणीतोदकस्पर्शः ।

॥ इत्यधिदेवताः ॥

प्रत्यधिदेवताः –

**ॐ अग्निन्दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२ऽआसादयादिह स्वाहा ॥**

इदमग्नये न मम ।

**ॐ अप्स्वग्ने सधिष्टव सौषधीरनुरुध्यसे । गर्ब्भे सञ्जायसे पुनः स्वाहा ॥**

इदमद्भ्यो न मम ।

**ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म्म सप्प्रथाः स्वाहा ॥**

इदं भूम्यै न मम ।

**ॐ इदं व्विष्णुर्व्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे स्वाहा ॥**

इदं विष्णवे न मम ।

**ॐ इन्द्रऽआसान्नेता ब्बृहस्पतिर्दक्षिणा यज्ञः पुरऽएतु सोमः । देवसेनानामभिभञ्जतीनाञ्जयन्तीनां मरुतो यन्त्वग्रꣳस्वाहा ॥**

इदमिन्द्राय न मम ।

**ॐ अदित्यै रास्नासीन्द्राण्याऽउष्णीषः । पूषासि घर्म्माय दीष्व स्वाहा ॥**

इदमिन्द्राण्यै न मम ।

**ॐ प्रजापते न त्वदेतान्यन्यो व्विश्वा रूपाणि परिता ब्बभूव । यत्कामास्ते जुहुमस्तन्नोऽअस्तु व्वयꣳस्याम पतयो रयीणाꣳस्वाहा ॥**

इदं प्रजापतये न मम ।

**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा ॥**

इदं सर्पेभ्यो न मम ।

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः सबुध्न्याऽउपमाऽअस्य व्विष्ठाः । सतश्च योनिमसतश्च व्विवः स्वाहा ॥**

इदं ब्रह्मणे न मम ।

॥ इति प्रत्यधिदेवताः ॥

दशदिक्पालाः –

**ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳस्वस्तिनो मघवा धात्विन्द्रः स्वाहा ॥**

इदमिन्द्राय न मम ।

**ॐ अग्निन्दूतं पुरो दधे हव्यवाहमुपब्रुवे । देवाँ२ऽ आसादयादिह स्वाहा ॥**

इदमग्नये न मम ।

**ॐ यमाय त्वा मखाय त्वा सूर्यस्य त्वा तपसे । देवस्त्वा सविता मध्वानक्तु पृथिव्याः सꣳस्पृशस्पाहि । अर्च्चिरसि शोचिरसि तपोऽसि स्वाहा ॥**

इदं यमाय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहि तस्करस्य । अन्यमस्मदिच्छ सातऽइत्यानमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥**

इदं निर्ऋतये न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद स्वाहा ॥**

इदं वरुणाय न मम ।

**ॐ व्वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ।**

इदं वायवे न मम ।

**ॐ सोमो धेनुँ सोमोऽअर्वन्तमाशुँ सोमो व्वीरङ्कर्मण्यन्ददाति । सादन्यं व्विदथ्यँ सभेयं पितृश्रवणं यो ददाशदस्मै स्वाहा ॥**

इदं सोमाय न मम ।

**ॐ तमीशानञ्जगतस्तस्थुषस्पतिन्धियञ्जिन्वमवसे हूमहे वयम् । पूषानो यथावेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये स्वाहा ॥**

इदमीशानाय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः । सबुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः स्वाहा ॥**

इदं ब्रह्मणे न मम ।

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । सभूमिँ सर्व्वतस्पृत्वात्यतिष्ठद्दशाङ्गुलꣳस्वाहा ॥**

इदमनन्ताय न मम ।

॥ इति दशदिक्पालाः ॥

अष्टवसवः –

**ॐ सुगावो देवाः सदनाऽअकर्म य आजग्मेदँ सवनञ्जुषाणाः । भरमाणा व्वहमाना हवीꣳष्यस्मे**

**धत्त व्वसवो व्वसूनि स्वाहा ॥**

इदं ध्रुवाद्यष्टवसुभ्यो न मम ।

द्वादशादित्याः –

**ॐ यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृडयन्तः । आवोर्व्वाची सुमतिर्व्ववृत्यादꣳहोश्चिद्या व्वरिवोव्वित्तरासत् स्वाहा ॥**

इदं धात्रादिद्वादशादित्येभ्यो न मम ।

एकादशरुद्राः –

**ॐ यऽएतावन्तश्च भूयाꣳसश्च दिशो रुद्रा व्वितस्थिरे । तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि स्वाहा ॥**

इदं वीरभद्राद्येकादशरुद्रेभ्यो न मम । अत्र प्रणीतोदकम्पर्शः ।

षोडशमातरः –

**ॐ गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी । अष्टापदी नवपदी ब्बभूवुषि सहस्राक्षरा परमे व्योमन् स्वाहा ॥**

इदं गौर्यादिषोडशमातृभ्यो न मम ।

अवहादिसप्तमरुतः –

**ॐ मरुतो यस्य हि क्षये पाथा दिवो व्विमहसः । ससुगोपातमो जनः स्वाहा ॥**

इदमावहादिसप्तमरुद्भ्यो न मम ।

विनायकादिषट् –

**ॐ गणानान्त्वा गणपतिꣳहवामहे प्प्रियाणान्त्वा प्प्रियपतिꣳहवामहे निधीनान्त्वा निधिपतिꣳहवामहे व्वसोमम । आहमजानि गर्ब्भधमा त्वमजासि गर्ब्भधꣳस्वाहा ॥**

इदं विनाकाय न मम ।

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो व्वेनऽआवः । सबुध्न्याऽउपमाऽअस्य व्विष्ठाः सतश्च योनिमसतश्च व्विवः स्वाहा ॥**

इदं ब्रह्मणे न मम ।

**ॐ इदं व्विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाᳬसुरे स्वाहा ॥**

इदं विष्णवे न मम ।

**ॐ मानस्तोके तनये मानऽआयुषि मानो गोषु मानोऽअश्वेषु रीरिषः । मानो व्वीरान् रुद्रभामिनो व्वधीर्हविष्मन्तः सदमित्वा हवामहे स्वाहा ॥**

इदं रुद्राय न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ अग्निरस्मि जन्मना जातवेदा घृतम्मे चक्षुरमृतम्मऽआसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम स्वाहा ॥**

इदमर्काय न मम ।

**ॐ व्वनस्पते व्वीड्वङ्गोहि भूयाऽअस्मत्सखा प्रतरणः सुवीरः । गोभिः सन्नद्धोऽअसि वीडयस्वास्थाता ते जयतु जेत्वानि स्वाहा ।**

इदं वनस्पतये न मम ।

## (द) विशेषकर्म[१६]

अत्र विशेषोद्देश्याभिमतं कर्म कृत्वा तत्पश्चादेव तदुत्तरं कर्म कुर्वन्ति ॥

## (ध) चतुःस्वस्त्यादिहोमः

**ॐ स्वस्तिनऽइन्द्रो व्वृद्धश्रवाः स्वस्तिनः पूषा व्विश्ववेदाः । स्वस्तिनस्तार्क्ष्योऽअरिष्टनेमिः स्वस्तिनो ब्बृहस्पतिर्दधातु स्वाहा ॥**

१६. जुन उद्देश्य लिएर त्यो कर्म गर्न लागिरहेको हो, त्यस कर्मको प्रधान देवताको विशेष पूजा, होम आदि जे जति गर्नु छ, त्यो सबै गरिसकेर मात्र चतुःस्वस्त्यादि होम गर्नुपर्दछ ।

इदं चतु:स्वस्तिभ्यो न मम ।

**ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यꣳस्वाहा ॥**

इदं पयःपञ्चभ्यो न मम ।

**ॐ व्विष्णोरराटमसि व्विष्णोः श्नप्त्रेस्थो व्विष्णोः स्यूरसि विष्णोर्ध्रुवोऽसि । व्वैष्णवमसि व्विष्णवे त्वा स्वाहा ॥**

इदं षड्विष्णुभ्यो न मम ।

**ॐ अग्निर्देवता व्वातो देवता सूर्यो देवता चन्द्रमा देवता व्वसवो देवता रुद्रा देवतादित्या देवता मरुतो देवता व्विश्वेदेवा देवता ब्बृहस्पतिर्देवतेन्द्रो देवता व्वरुणो देवता स्वाहा ॥**

इदं द्वादशदेवेभ्यो न मम ।

**ॐ द्यौः शान्तिरन्तरिक्षꣳशान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्ब्रह्म शान्तिः सर्वꣳशान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि स्वाहा ।**

इदं द्वादशशान्तिभ्यो न मम ।

**ॐ प्रातरग्निं प्रातरिन्द्रꣳहवामहे प्रातर्मित्रावरुणा प्रातरश्विना । प्रातर्भगं पूषणं ब्रह्मणस्पतिं प्रातः सोममुत रुद्रꣳहुवेम स्वाहा ॥**

इदं षट्प्रातर्भ्यो न मम ।

**ॐ समुद्राय त्वा व्वाताय स्वाहा सरिराय त्वा व्वाताय स्वाहा । अनाधृष्याय त्वा व्वाताय स्वाहा प्रतिधृष्याय त्वा व्वाताय स्वाहा । अवस्यवे त्वा व्वाताय स्वाहा शिमिदाय त्वा व्वाताय स्वाहा ॥**

इदं षट्वातेभ्यो न मम ।

**ॐ अनड्वान्वयः पङ्क्तिश्छन्दो धेनुर्वयो जगती छन्दस्त्र्यविर्वयस्त्रिष्टुप्छन्दो दित्यवाड्वयो विराट्छन्दः पञ्चाविर्वयो गायत्रीछन्दस्त्रिवत्सो वयऽउष्णिक्छन्दस्तुर्यवाड्वयोऽनुष्टुप्छन्दो लोकन्ताऽइन्द्रꣳस्वाहा ॥**

इदं त्र्यनडुद्भ्यो न मम ।

**ॐ भगऽएव भगवाँ२ऽअस्तु देवास्तेन वयं भगवन्तः स्याम । तन्त्वा भगः सर्व्वऽइज्जोहवीति स नो भगः पुरऽएता भवेह स्वाहा ॥**

इदं पञ्चभगेभ्यो न मम ।

**ॐ प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहा चक्षुषे स्वाहा श्रोत्राय स्वाहा व्वाचे स्वाहा मनसे स्वाहा ॥**

इदं पञ्चेन्द्रियेभ्यो न मम ।

**ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनीस्थो व्वरुणस्यऽऋतसदन्यसि व्वरुणस्यऽऋतसदनमसि व्वरुणस्यऽऋतसदनमासीद स्वाहा ॥**

इदं पञ्चवरुणेभ्यो न मम ।

**ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह । ब्बृहत्युष्णिहा ककुप्सूचीभिः शम्यन्तुत्वा स्वाहा ॥**

इदं गायत्र्यै न मम ।

**ॐ उपयामगृहीतोऽसि सावित्रोऽसि च नो धाश्चनोधाऽअसि च नो मयि धेहि । जिन्व यज्ञं जिन्व यज्ञपतिं भगाय देवायत्वा सवित्रे स्वाहा ॥**

इदं सावित्र्यै न मम ।

**ॐ सरस्वती योन्याङ्गर्ब्भमन्तरश्विभ्यां पत्नी सुकृतं ब्बिभर्ति । अपाꣳरसेन व्वरुणो न साम्नेन्द्रꣳश्रियै जनयन्नप्सु राजा स्वाहा ॥**

इदं सरस्वत्यै न मम ।

**ॐ गृहा मा ब्बिभीत मा व्वेपध्वमूर्जं ब्बिभ्रतऽएमसि । ऊर्जं ब्बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः स्वाहा ॥**

इदं गृहमात्रे न मम ।

**ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्रप्रदातारन्तारिषऽऊर्जन्नो धेहि द्विपदे चतुष्पदे स्वाहा ॥**

इदमन्नपूर्णायै न मम ।

**ॐ श्रीश्चते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।**

**इष्णन्निषाणामुम्मऽइषाण सर्वलोकम्मऽइषाण स्वाहा ॥**

इदं महालक्ष्म्यै न मम ।

**ॐ देवीर्द्वारऽइन्द्रꣳसङ्घाते व्वीड्वीर्यामन्नवर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवता पार्व्वाणꣳरेणुककाटन्नुदन्तां व्वसुवने व्वसुधेयस्य व्यन्तु यज स्वाहा ॥**

इदं महारिष्टविनाशिन्यै न मम ।

**ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ् काम्पीलवासिनीꣳस्वाहा ॥**

इदं चण्डचै न मम ।

**ॐ द्यौरासीत्पूर्वचित्तिरश्वऽआसीद्व्बृहद्वयः । अविरासीत् पिलिप्पिला रात्रिरासीत् पिशङ्गिला स्वाहा ॥**

इदं द्यौराल्यै न मम ।

**ॐ व्वसोः पवित्रमसि शतधारं व्वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु व्वसोः पवित्रेण शतधारेण सुप्वा कामधुक्षः स्वाहा ॥**

इदं वास्तुदेवाय न मम ।

**ॐ भूम्याऽआखूनालभतेऽन्तरिक्षाय पाङ्त्रान्दिवे कशान्दिग्भ्यो**
**नकुलान्बभ्रूकानवान्तरदिशाभ्यः स्वाहा ॥**

इदं भूमिदेवाय न मम ।

**ॐ नमः शम्भवाय च मयो भवाय च नमः शङ्कराय च । मयस्कराय च नमः शिवाय च शिवतराय च स्वाहा ॥**

इदं गैडुदेवाय न मम ।

**ॐ यद्ग्रामे यदरण्ये यत्सभायां यदिन्द्रिये । यदेनश्चकृमा व्वयमिदन्तदवयजामहे स्वाहा ॥**

इदं ग्रामदेवाय न मम ।

**ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् । ह्वयामि शक्रं पुरुहूतमिन्द्रꣳ स्वस्तिनो मघवा धात्विन्द्रः स्वाहा ॥**

इदं स्वर्गेन्द्राय न मम ।

**ॐ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽअन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः स्वाहा ॥**

इदं पातालवासुकिभ्यो न मम ।

**ॐ मित्रोनऽएहि सुमित्रधऽइन्द्रस्योरुमाविश दक्षिणमुशन्नुशन्तꣳस्योनः स्योनम् । स्वानभ्राजाङ्घारे ब्बम्भारे हस्त सुहस्त कृशानवे ते व्वः सोमक्रयणास्तान्रक्षध्वम्मा व्वो दभन् स्वाहा ॥**

इदं मित्रलोकपालाय न मम ।

**ॐ राजन्तमध्वराणाङ्गोपामृतस्य दीदिविम् । व्वर्धमानꣳस्वे दमे स्वाहा ॥**

इदं मान्धात्रे न मम ।

**ॐ ये तीर्थानि प्प्रचरन्ति सृकाहस्ता निषङ्गिणः । तेषाꣳसहस्रयोजनेऽवधन्वानि तन्मसि स्वाहा ॥**

इदं तीर्थराजाय न मम ।

**ॐ व्व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम् । दक्षिणा ꣳश्रद्धामाप्नोति श्रद्धया सत्यमाप्यते स्वाहा ॥**

इदं व्रतराजाय न मम ।

**ॐ प्राच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहा स्वाहावाच्यै दिशे स्वाहार्वाच्यै दिशे स्वहा ।**

इदं पुनर्दिक्पालेभ्यो न मम ।

**ॐ अग्नेः पक्षतिर्वायोर्निपक्षतिरिन्द्रस्य तृतीया सोमस्य चतुर्थ्यदित्यै पञ्चमीन्द्राण्यै षष्ठी मरुताꣳसप्तमी बृहस्पतेरष्टम्यर्यम्णो नवमी धातुर्दशमीन्द्रस्यैकादशी व्वरुणस्य द्वादशी यमस्य त्रयोदशी स्वाहा ॥**

इदं तिथिभ्यो न मम ।

**ॐ नक्षत्रेभ्यः स्वाहा नक्षत्रियेभ्यः स्वाहाहोरात्रेभ्यः स्वाहार्द्धमासेभ्यः स्वाहा मासेभ्यः स्वाहऽऋतुभ्यः स्वाहार्त्तवेभ्यः स्वाहा सँवत्सराय स्वाहा द्यावापृथिवीभ्याꣳस्वाहा चन्द्राय स्वाहा सूर्याय स्वाहा रश्मिभ्यः स्वाहा वसुभ्यः स्वाहा रुद्रेभ्यः स्वाहादित्येभ्यः स्वाहा मरुद्भ्यः स्वाहा व्विश्वेभ्यो**

**देवेभ्यः स्वाहा मूलेभ्यः स्वाहा शाखाभ्यः स्वाहा व्वनस्पतिभ्यः स्वाहा पुष्पेभ्यः स्वाहा फलेभ्यः स्वाहौषधीभ्यः स्वाहा ॥**

इदं नक्षत्रेभ्यो न मम ।

**ॐ योगे योगे तवस्तरं वाजे वाजे हवामहे । सखायऽइन्द्रमूतये स्वाहा ॥**

इदं योगेभ्यो न मम ।

**ॐ आदित्यङ्गर्ब्भम्पयसा समङ्धि सहस्रस्य प्रतिमां विश्वरूपम् । परिवृङ्धि हरसा माभिमꣳस्थाः शतायुषङ्कृणुहि चीयमानः स्वाहा ॥**

इदं वारेभ्यो न मम ।

**ॐ भद्रङ्कर्णेभिः श्रृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँ यदायुः स्वाहा ॥**

इदं करणेभ्यो न मम ।

**ॐ वायो ये ते सहस्रिणो रथासस्तेभिरागहि । नियुत्वान्त्सोमपीतये स्वाहा ॥**

इदं वातेभ्यो न मम ।

**ॐ वाताय स्वाहा धूमाय स्वाहाऽभ्राय स्वाहा मेघाय स्वाहा विद्योतमानाय स्वाहास्तनयते स्वाहावस्फूर्ज्जते स्वाहा व्वर्षते स्वाहाववर्षते स्वाहोग्रँ वर्षते स्वाहा शीघँ वर्षते स्वाहोद्गृह्णते स्वाहोद्गृहीताय स्वाहा प्रुष्णते स्वाहा शीकायते स्वाहा प्प्रुष्वाभ्यः स्वाहा ह्रादुनीभ्यः स्वाहा नीहाराय स्वाहा ॥**

इदं मेघेभ्यो न मम ।

**ॐ समुद्रङ्गच्छ स्वाहान्तरिक्षङ्गच्छ स्वाहा देवꣳसवितारङ्गच्छ स्वाहा मित्राव्वरुणौ गच्छ स्याहाऽहोरात्रे गच्छ स्वाहा छन्दाꣳसि गच्छ स्वाहा द्यावापृथिवी गच्छ स्वाहा यज्ञङ्गच्छ स्वाहा सोमङ्गच्छ स्वाहा दिव्यन्नभो गच्छ स्वाहाऽग्निं व्वैश्वानरङ्गच्छ स्वाहा मनो मे हार्दि यच्छ दिवन्ते धूमो गच्छतु स्वर्ज्योतिः पृथिवीं भस्मनाऽऽपृण स्वाहा ॥**

इदं समुद्रेभ्यो न मम ।

**ॐ नदीभ्यः पौञ्जिष्ठमृक्षीकाभ्यो नैषादं पुरुषव्याघ्राय दुर्मदङ्गन्धर्वाप्सरोभ्यो व्वात्यं प्रयुग्भ्यऽउन्मत्तꣳसर्पदेवजनेभ्योऽप्रतिपदमयेभ्यः कितवमीर्यतायाऽअकितवं पिशाचेभ्यो**

**व्विदलकारीं यातुधानेभ्यः कण्टकीकारीᳬस्वाहा ॥**

इदं नदीभ्यो न मम ।

**ॐ इष्टो यज्ञो भृगुभिराशीर्दा व्वसुभिः । तस्य नऽइष्टस्य प्रीतस्य द्रविणेहागमेः स्वाहा ॥**

इदमिष्टदेवाय न मम ।

**ॐ कुलायिनी घृतवती पुरन्धिः स्योने सीद सदने पृथिव्याः । अभित्वा रुद्रा व्वसवो गृणन्त्विमा ब्ब्रह्म पीपिहि सौभगायाश्विनाऽध्वर्षू सादयतामिह त्वा स्वाहा ॥**

इदं कुलदेवाय न मम ।

यत्र स्थापितो यो देवस्तं तत्तन्मन्त्रेण होमयेत् ।

**ॐ नमः शम्भवाय च मयोभवाय च नमः शङ्कराय च मयस्कराय च नमः शिवाय च शिवतराय च स्वाहा ॥**

इदं भैरवाय न मम ।

**ॐ देवीर्द्वारऽइन्द्रᳬसङ्घाते व्वीड्वीर्यामन्नवर्धयन् । आवत्सेन तरुणेन कुमारेण च मीवता पार्व्वाणᳬरेणुककाटन्नुदन्ताँ व्वसुवने व्वसुधेयस्य व्यन्तु यज स्वाहा ॥**

इदं भैरव्यै न मम ।

**ॐ अम्बेऽअम्बिकेम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकाङ् काम्पीलवासिनीᳬस्वाहा ॥**

इदं विन्ध्यवासिन्यै न मम ।

यत्र स्थानविशेषाधिष्ठितो यो देवो (देवी वा) तत्तन्मन्त्रेण होमयेत् ।

**ॐ एषोह देवः प्रदिशोऽनु सर्व्वाः पूर्वो ह जातः सऽउ गर्ब्भेऽअन्तः । सऽएव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्व्वतो मुखः स्वाहा ॥**

इदं सर्वेभ्यो देवेभ्यो न मम ।

**ॐशुक्रज्ज्योतिश्च चित्रज्ज्योतिश्च सत्यज्ज्योतिश्च ज्ज्योतिष्माँश्च ।शुक्रश्चऽऋतपाश्चात्यᳬहाः स्वाहा ॥**

इदं सर्वहोमपूरणार्थेभ्यो न मम ।

**ॐ राजन्तमध्वराणाङ्गोपामृतस्य दीदिविम् । व्वर्धमानꣳस्वे दमे स्वाहा ॥**

इदं पञ्चपाण्डवेभ्यो न मम ।

**ॐ उग्रश्च भीमश्च ध्वान्तश्च धुनिश्च । सासह्वाँश्चाभियुग्वा च व्विक्षिपः स्वाहा ॥**

इदं भीमसेनाय न मम ।

**ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः पितामहेभ्यः स्वधायिभ्यः स्वधा नमः प्रपितामहेभ्यः स्वधायिभ्यः स्वधा नमः । अक्षन् पितरोऽमीमदन्त पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वꣳस्वाहा ॥**

इदं पितृभ्यो न मम । अत्र प्रणीतोदकस्पर्शः ।

**ॐ ऋतावानं व्वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रङ्घर्म्ममीमहे । उपयामगृहीतोसि व्वैश्वानराय त्वैष ते योनिर्व्वैश्वानराय त्वा स्वाहा ॥**

इदं वैश्वानराय न मम ।

**ॐ वैश्वानरस्य सुमतौ स्याम राजा हि कम्भुवनानामभिश्रीः । इतो जातो व्विश्वमिदँ व्विचष्टे व्वैश्वानरो यतते सूर्येण । उपयामगृहीतोसि व्वैश्वानराय त्वैष ते योनिर्व्वैश्वानराय त्वा स्वाहा ।**

इदं वैश्वानराय न मम ।

**ॐ व्वैश्वानरो नऽऊतयऽआप्प्रयातु परावतः अग्निरुक्थेन व्वाहसा । उपयामगृहीतोसि व्वैश्वानराय त्वैष ते योनिर्व्वैश्वानराय त्वा स्वाहा ॥**

इदं वैश्वानराय न मम ।

**ॐ आकाशे यानि तीर्थानि यानि तीर्थानि भूतले ।**

**पाताले यानि तीर्थानि सर्वतीर्थ नमोऽस्तु ते स्वाहा ॥**

**ॐ आकाशे सन्ति ये देवा ये देवाः सन्ति भूतले ।**

**पाताले सन्ति ये देवाः सर्वदेव नमोऽस्तु ते स्वाहा ॥**

**ॐ आकाशे यानि लिङ्गानि यानि लिङ्गानि भूतले ।**

**पाताले यानि लिङ्गानि सर्वलिङ्ग नमोऽस्तु ते स्वाहा ॥**

ततो हुतशेषहविर्द्रव्यं गृहीत्वा ब्रह्मणान्वारब्धः स्विष्टकृद्धोमं कुर्यात् - [१७]

**ॐ अग्नये स्विष्टकृते स्वाहा । इदमग्नये स्विष्टकृते न मम ।**

ततः संस्रवप्राशनम् ।

ततो महाव्याहृत्यादि-उत्तराङ्गहोमस्तद्यथा -

ॐ महाव्याहृतीनां प्रजापतिऋषिरग्निवायुसूर्या देवता गायत्र्युष्णिगनुष्टुभश्छन्दांसि अग्न्याधाने विनियोगः ।

**ॐ भूः स्वाहा । इदमग्नये न मम ।** प्रोक्षणीपात्रेऽपि ।

**ॐ भुवः स्वाहा । इदं वायवे न मम ।** प्रोक्षणीपात्रेऽपि ।

**ॐ स्वः स्वाहा । इदं सूर्याय न मम ।** प्रोक्षणीपात्रेऽपि । एता महाव्याहृतयः ।

ॐ त्वन्नोऽअग्न इति वामदेवऋषिस्त्रिष्टुप्छन्द अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

**ॐ त्वन्नोऽअग्ने व्वरुणस्य विद्वान् देवस्य हेडोऽअवयासिसिषीष्ठाः । यजिष्ठो व्वह्नितमः शोशुचानो व्विश्वा द्वेषाᳬंसि प्रमुमुग्ध्यस्मत् स्वाहा ॥**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

ॐ स त्वन्नोऽअग्न इति वामदेवऋषिस्त्रिष्टुप्छन्द अग्नीवरुणौ देवते आज्यहोमे विनियोगः ।

**ॐ स त्वन्नोऽअग्नेवमो भवोती नेदिष्ठोऽअस्याऽउषसो व्युष्टौ । अवयक्ष्व नो व्वरुणᳬंरराणो व्वीहि मृडीकᳬंसुहवो नऽएधि स्वाहा ।**

इदमग्नीवरुणाभ्यां न मम । प्रोक्षणीपात्रेऽपि ।

---

१७. यद्यपि प्रचलित पद्धतिहरूमा प्रजापतिहोमसम्मको सम्पूर्ण होम समाप्ति भएपछि सबैभन्दा पछाडि 'स्विष्टकृद् होम' राखिएको छ, तापनि "प्राङ्महाव्याहृतिभ्यः स्विष्टकृद् अन्यच्चेदाज्याद्धविः" अर्थात् आज्यहविदेखि अतिरिक्त चरु आदि अन्य हविहरू पनि भएको यज्ञमा महाव्याहृति होमभन्दा अगाडि स्विष्टकृद्धोम गर्नू भन्ने सूत्रवचन र शिष्ट प्रयोग पनि देखिएकाले यहाँ पनि महाव्याहृति होमभन्दा अगाडि स्विष्टकृद्धोम राखिएको छ ।

ॐ अयाश्चाग्न इति वामदेवऋषिस्त्रिष्टुप्छन्द अग्निर्देवता प्रायश्चित्तहोमे विनियोगः ।

**ॐ अयाश्चाग्नेऽस्यनभिशस्तिपाश्च सत्यमित्वमयाऽ असि । अया नो यज्ञँ व्वहास्ययानो धेहि भेषजꣳस्वाहा ॥**

इदमग्नये न मम । प्रोक्षणीपात्रेऽपि ।

ॐ ये ते शतमिति वामदेवऋषिस्त्रिष्टुप्छन्दो वरुणः सविता विष्णुर्विश्वेदेवा मरुतः स्वर्का देवताः प्रायश्चित्तहोमे विनियोगः ।

**ॐ ये ते शतँ व्वरुणँ ये सहस्रँ यज्ञियाः पाशा व्वितता महान्तः । तेभिर्नोऽअद्य सवितोत व्विष्णुर्व्विश्वे मुञ्चन्तु मरुतः स्वर्क्काः स्वाहा ॥**

इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यो न मम । प्रोक्षणीपात्रेऽपि ।

ॐ उदुत्तममिति शुनःशेप ऋषिस्त्रिष्टुप्छन्दो वरुणो देवता पाशान्मोचने विनियोगः ।

**ॐ उदुत्तमँ व्वरुण पाशमस्मदवाधमं व्विमध्यमꣳश्रथाय । अथा व्वयमादित्यव्व्रते तवानागसोऽअदितये स्याम स्वाहा ॥**

इदं वरुणाय न मम । प्रोक्षणीपात्रेऽपि ।

ॐ प्रजापतय इति प्रजापतिऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः ।

**ॐ प्रजापतये स्वाहा । इदं प्रजापतये न मम ।** (इति मनसा)

एवं होमं समाप्याग्नेः स्थापितदेवतानां चोत्तराङ्गपूजनं कार्यम् ।

ॐ अद्येत्यादि पूर्वसङ्कल्पसिद्धिरस्तु कृतस्य (अमुक)कर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तराङ्गपूजनं करिष्ये । इति सङकल्प्य गन्धाद्युपचारैः सम्पूजयेत् -

**ॐ अग्नेनय सुपथा रायेऽअस्मान् व्विश्वानि देव व्वयुनानि व्विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठान्ते नमऽउक्तिं व्विधेम ॥**

ॐ मृडाग्नये नमः [१८] । ॐ स्थापितदेवताभ्यो नमः ।

अनया पूजया मृडाग्निः स्थापितदेवताश्च प्रीयन्ताम्, न मम ।

ततो होता ॐ अद्येत्यादि कृतस्यामुककर्मणः परिपूर्णतासिद्धयर्थं पूर्णाहुतिं होमयिष्ये । इति सङ्कल्प्य पूर्णाहुतिं होमयेत् -

**ॐमूर्धानन्दिवोऽअरतिं पृथिव्या व्वैश्वानरमृतऽआजातमग्निम् ।कविᳪ सम्राजमतिथिञ्जनानामासन्ना पात्रञ्जनयन्त देवाः स्वाहा ॥**

स्रुचश्चम इति स्रुवपूजनम् -

**ॐ स्रुचश्च मे चमसाश्च मे व्वायव्यानि च मे द्रोणकलशश्च मे ग्रावाणश्चमेधिषवणे च मे पूतभृच्चमऽआधवनीयश्च मे व्वेदिश्च मे बर्हिश्च मेऽवभृथश्च मे स्वगाकारश्च मे यज्ञेन कल्पन्ताम् ॥**

## (न) पूर्णपात्रदानम्

रौप्यं ताम्रं मृण्मयं वा यत्सम्भवं पात्रं फलवस्त्रद्रव्यसहितं षट्पञ्चाशदधिकद्विशत(२५६)- मुष्टिपरिमितं बहुभोक्तृपुरुषाहारपरिमितं वा तण्डुलयुतं पूर्णपात्रमादाय पूर्णादर्वीति पूर्णपात्रं ब्राह्मणं च त्रिः सम्पूज्य सङ्कल्पयेत् -

**ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत । व्वस्नेव व्विक्रीणावहाऽइषमूर्ज्जᳪशतक्रतो ।**

ॐ अद्येहेत्यादि अस्मिन् (अमुक)कर्माङ्गभूतहोमकर्मणि कृताकृतावेक्षणरूपब्रह्मकर्म- प्रतिष्ठार्थमिदं पूर्णपात्रं प्रजापतिदैवतं यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । इति सङ्कल्प्य पूर्णपात्रं ब्रह्मणे दद्यात् । ॐ स्वस्तीति प्रतिवचनम् ।

---

१८. यद्यपि स्थापितदेवताहरूको उत्तराङ्गपूजा र मृडाग्निपूजा प्रचलित अग्निस्थापन पद्धतिहरूमा छैन तापनि राख्नु उचित सम्झिएकाले प्रक्षेप जस्तो गरी यहाँ राखिएको छ ।

मृडाग्निलक्षणम्- 'पूर्वप्रज्वलितो ह्यग्निर्हविर्द्रव्यबुभुक्षितः । तृप्तो निर्धूमनिर्ज्वालो मृडाग्निपरिकीर्तितः ।

ततः प्रणीताविमोकः -

**ॐ सुमित्रिया नऽआपऽओषधयः सन्तु ।**

इति पवित्राभ्यां प्रणीतोदकेन कर्तुः शिरः सम्मृज्य प्रणीतापात्रमैशान्यां न्युब्जीकुर्यात् -

**ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयन्द्विष्मः ।**

ततस्तरणक्रमेणैव बर्हिरुत्थाप्य आज्येनाभिघार्य 'देवा गातुविद' इति पठित्वा हस्तेनैव होमयेत् -

**ॐ देवा गातुविदो गातुँ वित्त्वा गातुमित । मनसस्पतऽइमन्देव यज्ञꣳस्वाहा वातेधाः ॥**

## (प) महाबलिः –

ततो आचार्य (ब्राह्मणो वा) माषतण्डुलाद्यन्नकुङ्कुमादिगन्धरक्तपुष्पादियुतं सदीपं सवस्त्रं सदक्षिणं सजलं बलिं क्षेत्रपालाय दद्यात् । तत्र मन्त्रः -

**ॐ क्षेत्रपालाय भूतप्रेतपिशाचराक्षसशाकिनीडाकिनी-वेतालादिपरिवारयुताय इमं बलिं समर्पयामि, भो भो क्षेत्रपाल ! इमं बलिं गृहाण, मम यजमानस्य आयुः कर्ता, क्षेमकर्ता, वरदस्तुष्टिदो भव ।**

इति पठित्वा बलिं शूद्रेण ब्राह्मणेन वा चतुष्पथे विसर्जयेत् ।

तत आचार्यः प्रक्षालितपाणिपाद आचामेत् ।

## (फ) यज्ञान्तगोदानम्

यजमानोऽग्नेः पश्चिमभागे प्राङ्मुख उपविश्य उदङ्मुखेभ्य आचार्यऋत्विगादिभ्यो दक्षिणां दद्यात्।

तत्रादौ गोपूजनम् -

**ॐ नमो गोभ्यः श्रीमतीभ्यः सौरभेयिभ्य एव च ।**

**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥**

**ॐ इरावती धेनुमती हि भूतꣳसूयवसिनी मनवे दशस्या । व्यस्कभ्ना रोदसी व्विष्णवे ते दाधर्त्थपृथिवीमभितो मयूखैः स्वाहा ॥**

इति मन्त्रद्वयेन गां त्रिः सम्पूज्य ब्राह्मणं त्रिः सम्पूजयेत् -

**ॐ आ कृष्णेन रजसा व्वर्तमानो निवेशयन्नमृतं मर्त्यञ्च । हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥**

ततः कुशजलेन गामभ्युक्ष्य गोपुच्छं गृहीत्वा पूर्वं तर्पयित्वा पश्चात् स्वशिरसि अभिषिञ्चेदनेन मन्त्रेण -

**ॐ मनो मे तर्प्पयत व्वाचं मे तर्प्पयत प्राणम्मे तर्प्पयत चक्षुर्म्मे तर्प्पयत श्रोत्रम्मे तर्प्पयतात्मानं मे तर्प्पयत प्रजाम्मे तर्प्पयत पशून्मे तर्प्पयत गणान्मे तर्प्पयत गणा मे मा व्वितृषन् ॥**

ततः कुशादिसहितं गोपुच्छमादाय -

ॐ तत्सत् ॐ विष्णुः ३ इत्यादि देशकालौ स्मृत्वा (अमुक) गोत्रः (अमुक) प्रवरः (अमुक) शाखान्तर्गत (अमुक) वेदाध्यायी (अमुक) शर्मा/वर्मा/गुप्तः/दासः अहं (अमुक) देवताप्रीतये (अमुक) कर्माङ्गत्वेन यथालब्धोपचारैरादौ दीपकलशगणेशादीनां पूजनपूर्वकं कृतस्य हवनकर्मणः साङ्गतासिद्धये अस्य कर्मणः षाड्गुण्यफलावाप्तये इमां गां रुद्रदैवतां तत्प्रत्याम्नायीभूतं (अमुक) द्रव्यम् (अमुकदैवतं वा) (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

गोप्रार्थना -

**ॐ कपिले सर्वदेवानां पूजनीयासि रोहिणि ।**

**तीर्थदेवमयी यस्मात्तस्माच्छान्तिं प्रयच्छ मे ॥**

ततो दानप्रतिष्ठार्थं कुशादिसहितं द्रव्यमादाय -

ॐ अद्य कृतैतद् (अमुक) कर्मणः साङ्गतासिद्धिद्वारा श्रीमत्परमेश्वरप्रीतये गोदानप्रतिष्ठार्थमिदं द्रव्यं रजतखण्डं चन्द्रदैवतं (ताम्रखण्डं श्रीसूर्यदैवतं, पैतलं कुजदैवतं, वानस्पत्यं द्रव्यं वनस्पतिदैवतं, सुवर्णं अग्निदैवतं वा) (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

ब्राह्मणश्च - **ॐ स्वस्तीति प्रतिवचनम् ।**

**ॐ कोऽदात् कस्माऽअदात् कामोऽदात् कामायादात् ।**

**कामो दाता कामः प्रतिग्रहीता कामैतत्ते ॥**

## (ब) मेधाकरणम्

घृतपूर्णस्रुवे नारिकेलपूगीफलादिकं चन्दनपुष्पाणि च निधाय घृतधारां पातयन् होमयेदेभिर्मन्त्रैः -

**ॐ सदसस्पतिमद्‌भुतं प्रियमिन्द्रस्य काम्यम् । सनिम्मेधामयासिषꣳस्वाहा ॥**

**ॐ याम्मेधान्देवगणाः पितरश्चोपासते । तया मामद्यमेधयाग्ने मेधाविनङ्कुरु स्वाहा ॥**

**ॐ मेधाम्मे व्वरुणो ददातु मेधामग्निः प्रजापतिः । मेधामिन्द्रश्च व्वायुश्च मेधान्धाता ददातु मे स्वाहा ॥**

**ॐ आकूतिमग्निं प्रयुजꣳस्वाहा व्वाचो व्विधृतिमग्निम्प्प्रयुजꣳस्वाहा प्प्रजापतये मनवे स्वाहाग्नये वैश्वानराय स्वाहा ॥**

**ॐ सप्त तेऽअग्ने समिधः सप्तजिह्वाः सप्तऽऋषयः सप्तधाम प्प्रियाणि । सप्तहोत्राः सप्तधा त्वा यजन्ति सप्त योनीरापृणस्व घृतेन स्वाहा ॥**

**ॐ पूर्णादर्वि परापत सुपूर्णा पुनरापत । व्वस्नेव विक्रीणावहाऽइषमूर्ज्जꣳशतक्रतो ॥**

**ॐ इदम्मे ब्ब्रह्म चक्षत्रञ्चोभे श्रियमश्नुताम् । मयि देवा दधतु श्रियमुत्तमान्तस्यैते स्वाहा ॥**

## (भ) शेषचरुहोमः

तत्रादौ वस्त्रहोमः -

यजमानः सपरिवारो बन्धुवर्गैः सह घृताक्तवस्त्रचन्दनजलपुष्पफलचर्वादिभिरग्निं सम्पूजयेत्-

**ॐ एधोस्येधिषीमहि समिदसि तेजोसि तेजो मयि धेहि । समाववर्ति पृथिवी समुषाः समुसूर्यः समु व्विश्वमिदं जगत् । व्वैश्वानरञ्ज्योतिर्ब्भूयासं विभून्कामान्व्यश्नवै भूः स्वाहा ॥**

ततः शेषचरुहोमः -

**ॐ अब्भ्यादधामि समिधमग्ने व्रतपते त्वयि । व्रतञ्च श्रद्धाञ्चोपैमीन्धे त्वा दीक्षितोऽअहम् ॥**

**ॐ यत्र ब्रह्म च क्षत्रञ्च सम्यञ्चौ चरतः सह । तँल्लोकं पुण्यं प्रज्ञेषं यत्र देवाः सहाग्निना ॥**

**ॐ यत्रेन्द्रश्च वायुश्च सम्यञ्चौ चरतः सह । तँल्लोकं पुण्यं प्रज्ञेषं यत्र सेदिर्न विद्यते स्वाहा ॥**

॥ इति शेषचरुहोमः ॥

ततः स्रुवेण किञ्चिद् भस्म गृहीत्वा अवशिष्टाज्येन पिष्ट्वा तत्तिलकं हस्तेन स्पृष्ट्वाभिमन्त्रयेदनेन मन्त्रेण -

**ॐ अग्नये गायत्राय त्रिवृते राथन्तरायाष्टाकपालऽइन्द्राय त्रैष्टुभाय पञ्चदशाय बार्हतायैकादशकपालो विश्वेभ्यो देवेभ्यो जागतेभ्यः सप्तदशेभ्यो वैरूपेभ्यो द्वादशकपालो मित्रावरुणाभ्यामानुष्टुभाभ्यामेकविꣳशायशाक्वराय चरुः सवित्रऽऔष्णिहाय त्रयस्त्रिꣳशाय रैवताय द्वादशकपालः प्राजापत्यश्चरुरदित्यै विष्णुपत्न्यै चरुरग्नये वैश्वानराय द्वादशकपालोनुमत्याऽअष्टाकपालः ॥**

ततो यजमानस्य तिलकं कुर्यात् -

**ॐ त्र्यायुषञ्जमदग्नेः** । इति ललाटे ।

**ॐ कश्यपस्य त्र्यायुषम्** । इति ग्रीवायाम् ।

**ॐ यद्देवेषु त्र्यायुषम्** । इति दक्षिणबाहुमूले ।

**ॐ तन्नोऽअस्तु त्र्यायुषम्** । इति हृदि ।

## (म) घृतच्छाया

ततो यजमानो घृते छायां निरीक्ष्य तं ब्राह्मणाय दद्यात्, तत्र क्रमः-

रौप्यपात्रे ताम्रपात्रे कांस्यपात्रे वा घृतं सुवर्णं च निधाय तेजोऽसि, ध्रुवासि इति मन्त्रद्वयं पठन्

छायाँ निरीक्षेत -

तेजोऽसीति परमेष्ठी ऋषिर्गायत्रीच्छन्दः आज्यं देवता आज्यावेक्षणे विनियोगः ।

**ॐ तेजोऽसि शुक्रममृतमायुष्पाऽआयुर्म्मे पाहि । देवस्यत्वा सवितुः प्प्रसवेश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्यामाददे ॥**

**ॐ ध्रुवासि ध्रुवोयं यजमानोऽस्मिन्नायतने प्रजया पशुभिर्ब्भूयात् । घृतेन द्यावापृथिवी पूर्य्येथामिन्द्रस्यच्छदिरसि विश्वजनस्यच्छाया ॥**

तत आज्यं स्पृष्ट्वा पठेत् -

**ॐ अलक्ष्मीर्यच्च दौस्थ्यं मे सर्वगात्रेष्ववस्थितम् ।**

**तत्सर्वं शमयाज्य त्वं लक्ष्मीं पुष्टिं च वर्धय ॥**

**ॐ आज्यं तेजः समुद्दिष्टमाज्यं पापहरं शुभम् ।**

**आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः ॥**

**ॐ नभोऽन्तरिक्षं दिव्यं वा यन्मे किल्विषमागतम् ।**

**सर्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु ॥**

ततो दूर्वां स्पृष्ट्वा पठेत् -

**ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥**

**ॐ या क्षीरसागरोत्पन्ना दूर्वा पीयूषसम्भवा ।**

**तत्संस्पर्शनमात्रेण हयायुर्वृद्धिर्यशोबलम् ॥**

ततस्तदाज्यपात्रं कुशतिलजलसहितमादाय -

ॐ अद्येहेत्यादि मम दुःस्वप्नदुर्निमित्तादिसर्वारिष्टोपशमनपूर्वकम् असमानतेजःप्रज्ञाशौर्य-यशोबलायुर्लक्ष्मीपुष्टिवर्धनार्थमिदमाज्यं मृत्युञ्जयदैवतं कांस्यपात्रं (रौप्यं ताम्रं वा) चन्द्रदैवतं सुवर्णमग्निदैवतं (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम ।

प्रार्थना -

**ॐ कामधेनोः समुद्भूतं देवानामुत्तमं हविः ।**

**आयुर्वृद्धिकरं दातू राज्यं पातु सदैव माम् ।**

ततो महामृत्युञ्जयः प्रीयतामिति संप्रार्थ्य दानप्रतिष्ठां दद्यात् ।

## (य) भूयसीदक्षिणा विसर्जनं च

तत्रादौ भूयसीदक्षिणादानम् -

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।**

इति देयं ब्राह्मणं च त्रिः सम्पूज्य कुशादिसहितं दक्षिणाद्रव्यमादाय -

हरिः ॐ तत्सद्विष्णुरित्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रः (अमुक) शर्माहं कृतस्यामुककर्मणो अमुकदेवताप्रीतये कृतस्य देवतापूजनहवनादिकर्मणः न्यूनातिरिक्ततापरिपूर्तिपूर्वकं यथोक्तफलप्राप्त्यर्थमिदं दक्षिणाद्रव्यम् (अमुक) दैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो दीनानाथेभ्यश्च यथायोग्यभागं विभज्य यथाकाले दातुमहमुत्सृजे । इति जले उत्सृजेत् ।

सिद्धान्नदानम् (आमान्नदानं वा)

ॐ अद्येहामुकगोत्रोऽमुकशर्माहं कृतस्य (अमुक) कर्मणो यथावत्फलप्राप्तये नानानामगोत्रान् नानानामशर्मणो ब्राह्मणान् यथोपपन्नेनान्नेन भोजयिष्ये (आमान्नपक्षे-सन्तोषयिष्ये) ।

ततो विसर्जनम्

ततः कर्ता देवायार्घ्यं निवेद्य बन्धुवर्गैर्ब्राह्मणैश्च सह यज्ञे देवेषु च पुष्पाक्षताः क्षिपन् यानि कानीति मन्त्रेण यज्ञप्रदक्षिणां कृत्वा नमस्कुर्यात् -

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च । तानि तानि प्रणश्यन्तु प्रदक्षिणपदे पदे ॥**

ततः पुष्पाक्षतैः ब्रह्माणं सम्पूज्य 'उत्तिष्ठ ब्रह्मणस्पते' इति विसृज्य उत्थापयेत् -

**ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे । उपप्रयन्तु मरुतः सुदानवऽइन्द्रप्प्राशूर्भवा सचा ॥**

ततो यान्तु देवेति पुष्पाक्षतैरभ्यर्च्य देवान् विसर्जयेत् -

**ॐ यान्तु देवगणाः सर्वे पूजामादाय पार्थिवीम् ।**

**इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥**

**ॐ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ।**

**यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥**

**ॐ आवाहनं न जानामि न जानामि विसर्जनम् ॥**

**पूजां चैव नजानामि क्षमस्व परमेश्वर ॥**

ततः कर्मपात्रावशिष्टजलादिकमादाय -

**ॐ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात् ।**

**करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पये तत् ॥**

ततो यस्य स्मृत्येति अच्युतं नमस्कुर्यात् -

**ॐ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**

**न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥**

ॐ अच्युताय नमः । ॐ अच्युताय नमः । ॐ अच्युताय नमः ।

**ॐ चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।**

**हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥**

ॐ विष्णवे नमः । ॐ विष्णवे नमः । ॐ विष्णवे नमः ।

## (र) अभिषेकः प्रसादग्रहणञ्च

आचार्यादयो ब्राह्मणाः शान्तिकलशोदकेन पौराणिकैर्वैदिकैश्च मन्त्रैर्यजमानस्याभिषेकं कुर्युः । तत्रादौ पौराणिका मन्त्राः -

**ॐ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।**

**वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥१॥**

**प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते ।**

**आखण्डलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥२॥**

**वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ।**

**ब्रह्मणा सहितः शेषो दिक्पालाः पान्तु ते सदा ॥३॥**

**कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥**

**बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिश्च मातरः ॥४॥**

**पञ्चदेवाश्च योगाश्च करणानि च वासशः ।**

**एतास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ ५ ॥**

**देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ॥**

**ऋषयो मनवो गावो देवमातर एव च ॥ ६ ॥**

**देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसो गणाः ।**

**अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ ७ ॥**

**औषधानि च रत्नानि कालस्यावयवाश्च ये ।**

**सरितः सागराः शैलास्तीर्थानि जलदा नदाः ॥८ ॥**

**विश्वब्रह्माण्डदेवाश्च सलोकाः सचराचराः ॥**

**एते त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ९ ॥**

॥ इति पौराणिका मन्त्राः ॥

वैदिका मन्त्राः –

**ॐ देवस्यत्वा सवितुः प्प्रसवेश्विनोर्ब्बाहुभ्यां पूष्णो हस्ताभ्याम् । अश्विनोर्भैषज्ज्येन तेजसे ब्ब्रह्मवर्च्चसायाभिषिञ्चामि सरस्वत्यै भैषज्ज्येन व्वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण ब्बलाय श्रियै यशसेऽभिषिञ्चामि ॥**

**ॐ कोऽसि कतमोऽसि कस्मै त्वा काय त्वा । सुश्लोक सुमङ्गल सत्यराजन् ॥**

**ॐ शिरो मे श्रीर्यशो मुखन्त्विषिः केशाश्च श्मश्रूणि । राजा मे प्राणोऽअमृतꣳसम्राट् चक्षुर्व्विराट् श्रोत्रम् ॥**

ॐ जिह्वा मे भद्रँ वाङ्महो मनो मन्युः स्वराड् भाम । मोदाः प्रमोदाऽअङ्गुलीरङ्गानि मित्रम्मे सहः ॥

ॐ ब्बाहू मे ब्बलमिन्द्रियꣳहस्तौ मे कर्म व्वीर्यम् । आत्मा क्षत्रमुरो मम ॥

ॐ पृष्टीर्म्मे राष्ट्रमुदरमꣳसौ ग्रीवाश्च श्रोणी । ऊरुऽअरत्नी जानुनी व्विशो मेऽङ्गानि सर्वतः ॥

ॐ नाभिर्म्मे चित्तँ व्विज्ञानं पायुर्म्मेऽपचित्तिर्भसत् । आनन्दनन्दावाण्डौ मे भगः सौभाग्यं पसः । जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि व्विशि राजा प्रतिष्ठितः ॥

ॐ प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे प्रत्यश्वेषु प्रतितिष्ठामि गोषु । प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे प्रतिद्यावापृथिव्योः प्रतितिष्ठामि यज्ञे ॥

ॐ त्रया देवाऽएकादश त्रयस्त्रिꣳशाः सुराधसः बृहस्पति पुरोहिता देवस्य सवितुः सवे । देवा देवैरवन्तु मा ॥

ॐ प्रथमा द्वितीयैर्द्वितीयास्तृतीयैस्तृतीयाः सत्येन सत्यं यज्ञेन यज्ञो यजुर्भिर्यजूꣳषि सामभिः सामान्यृग्भिर्ऋचः पुरोऽनुवाक्याभिः पुरोऽनुवाक्या याज्याभिर्याज्या व्वषट्कारैर्वषट् काराऽआहुतिभिराहुतयो मे कामान्त्समर्धयन्तु भूः स्वाहा ॥

ॐ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । व्वनस्पतयः शान्तिर्व्विश्वेदेवाः शान्तिर्ब्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥

ॐ तच्चक्षुर्द्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम्प्रब्रवाम शरदः शतमदीनाः स्याम शरदः शतम्भूयश्च शरदः शतात् ॥

ॐ स्वस्ति नऽइन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः । स्वस्ति नस्तार्क्ष्योऽअरिष्टनेमिः स्वस्ति नो ब्बृहस्पतिर्दधातु ॥

ॐ व्विश्वानि देव सवितर्दुरितानि परासुव । यद्भद्रन्तन्नऽआसुव ॥

ॐ यथेमां व्वाचङ्कल्याणीमावदानि जनेभ्यः । ब्रह्मराजन्याभ्याꣳशूद्राय चार्याय च स्वाय चारणाय च । प्प्रियो देवानान्दक्षिणायै दातुरिह भूयासमयम्मे कामः समृद्ध्यतामुपमादो नमतु ॥ ॥

इत्यभिषेकः ॥

प्रसादग्रहणम् –

**तत आचार्यादयो हस्ते प्रसादादिकं गृहीत्वा 'आब्रह्मन्' इत्याद्याशीर्वादमन्त्रान् पठेयुः -**

**ॐ आ ब्ब्रह्मन् ब्ब्राह्मणो ब्ब्रह्मवर्च्चसी जायतामाराष्ट्रे राजन्यः शूरऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य व्वीरो जायतान्निकामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो नऽओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ॥**

**ॐ दीर्घायुस्तऽओषधे खनिता यस्मै च त्वा खनाम्यहम् । अथोत्वन्दीर्घायुर्भूत्वा शतवल्शा व्विरोहतात् ॥**

**ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो व्वसुनीथ यज्ञैः । घृतेन त्वन्तन्वं व्वर्द्धयस्व सत्याः सन्तु यजमानस्य कामाः ॥**

**ॐ मनसः काममाकूतिं व्वाचः सत्यमशीय । पशूनाꣳरूपमन्नस्य रसो यशः श्रीः श्रयताम् ॥**

**ॐ आयुष्यं वर्च्चस्यꣳरायस्पोषमौद्भिदम् । इदꣳहिरण्यं व्वर्च्चस्वं जैत्रायाविशतादुमाम् ॥**

**ॐ न तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳह्येतत् । यो बिभर्ति दाक्षायणꣳहिरण्यꣳस देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ॥**

रक्षाबन्धनम् –

**ॐ येन बद्धो बली राजा दानवेन्द्रो महाबलः ॥ तेन त्वां प्रतिबध्नामि रक्षे मा चल मा चल ॥**

**ॐ त्वँ यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः ॥ रक्षा तोकमुत्त्मना ॥**

आशीर्वादः –

**ॐ स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु, गोवाजिहस्तिधनधान्यसमृद्धिरस्तु ।**

**ऐश्वर्य्यमस्तु विजयोऽस्तु रिपुक्षयोऽस्तु, सन्तानवृद्धिसहिता हरिभक्तिरस्तु ॥**

इत्याशीर्वादपुरःसरं ब्राह्मणहस्तेन प्रसादादिकं गृहीत्वा ब्राह्मणान् भोजयित्वा स्वयमपि सुहृद्युक्तो भुञ्जीत ।

॥ इत्यग्निस्थापनविधिः ॥

## सामान्य अग्निस्थापना (होम) का लागि आवश्यक सामग्री

सामान्य पूजाका सामग्री भाग १ । कर्मपात्र । कुश । रेखी हाल्ने पिठो र अबिर । धान टपरी ५ । चामल टपरी ७ । कलश ५ । दियो । अर्घ्य, त्रिकुटी । पञ्चपात्र, आचमनी । पलाँसका समिधा । आगो बाल्ने दाउरा । प्रणीतापात्र । प्रोक्षणीपात्र । आज्यस्थाली । चरुस्थाली । घिउ । चरु । सुरो । काँचो धागो । सर्स्यूं । सर्वौषधी । सप्तमृत्तिका, पञ्चपल्लव । जनै, सुपारी । रातो, सेतो वस्त्र । फूल । दुबो । धूप । बत्ती । नैवेद्य रोटी । फलफूल । पानमसला । पञ्चामृत । पञ्चगव्य । बोहोता, टपरी । पूर्णपात्र । गाई वा गोमूल्य । क्षेत्रपालबलि । काँसको कचौरा । सुवर्ण भेटी । दक्षिणा इत्यादि ।

### शब्दार्थाः

| | | |
|---|---|---|
| दारुकम् | = | दाउरा, समिधा |
| समिधा | = | पलाँशका दाउरा । |
| प्रणीतापात्रम् | = | यज्ञमा पानी हालेर राख्ने सिप्लिकानको चारकुने पात्र । |
| प्रोक्षणीपात्रम् | = | तीनकुने वा बिँड भएको बाटुलो पात्र । |
| उपयमनम् | = | १३ ओटा कुश हालेर बनाएको कपडा वा धागोले बेह्रेको कुशको मुठो । |
| पवित्रम् | = | १ कुरेतका २ कुशको टुप्पो मिलाएर ग्रन्थि बनाइएको । |
| स्फ्यः | = | खयर काठको खड्गजस्तो आकारमा बनाएको यज्ञपात्र । |
| पात्रासादनम् | = | यज्ञमा आवश्यक पात्र र सामग्रीहरू संस्कारपूर्वक सङ्कलन गरेर जोडा जोडा मिलाएर राख्नु । |
| चुलुक | = | उत्तानो हात गरी कान्छीऔंला छाडेर अरू चार औंला जोडिएको चुलुक मुद्रा हो । |
| इन्धनम् | = | दाउरा । |

| | | |
|---|---|---|
| पूर्णपात्रम् | = | २५६ मुठी (दुई पाथी ५ माना ६ मुठी) अथवा १ पाथी अथवा २ माना चामल डालो, प्याङ् वा टपरी कुनै पात्रमा हालेर जनै, वस्त्र, सुपारी, द्रव्यहरू समेत राखेर ब्रह्मालाई दिइने एक प्रकारको आमान्न दक्षिणा । |
| मेधाकरणम् | = | सुरोमा जटा नरिवल वा सुपारी वस्त्र आदि राखी यजमानले स्पर्श गरेर ब्रह्मा र होताले घृतधारा गरिने कर्म । |
| घृतच्छाया | = | घिउलाई काँसको कचौरा वा दुनोमा राखी त्यसमा दुवोले चलाउँदै आफ्नो छाया हेर्नु र दान गर्नु । |

## अभ्यासः

**१. शब्दार्थान् लिखत**

परिसमूहनम् । उदक्संस्थम् । सीमन्तोन्नयनम् । द्वन्द्वशः । न्युब्जम् । ज्वलदुल्मुकम् । अव्रणम्

**२. अधस्तनशब्दान् प्रयुज्य वाक्यरचना विधेया**

उद्धृत्य । स्थण्डिलम् । परिस्तरणम् । स्रुवः । पुरतः । परितः । आज्यम् ।

**३. परस्परं मेलयत**

| | | |
|---|---|---|
| (क) | पूर्वे | पौष्टिकाय नमः |
| | आग्नेय्याम् | बलवर्धनाय नमः |
| | दक्षिणे | यजुर्वेदाय नमः |
| | नैर्ऋत्याम् | प्रजापतये नमः |
| | पश्चिमे | ऋग्वेदाय नमः |
| | वायव्याम् | अथर्ववेदाय नमः |
| | उत्तरे | शिवाय नमः |
| | ऐशान्याम् | विष्णवे नमः |
| | | सामवेदाय नमः |
| | | ब्रह्मणे नमः |

| | |
|---|---|
| (ख) गर्भाधाने | समुद्भवः |
| वेदारम्भे | पार्थिवः |
| व्रतदाने | भरतः |
| नामकरणे | योजकः |
| चूडाकर्मणि | शोभनः |
| विवाहे | हरिः |
| | सभ्यः |
| | अनलः |

**४. कोष्ठस्थं सर्वोपयुक्तं पदमवचित्य वाक्यपूर्णो विधेयः**

(क) भूमिसंस्कारे ....... उल्लिख्यते । (क्षुरेण, स्रुवमूलेन, कुशेन, कुद्दालेन)

(ख) पञ्चवारुणिहोमः ....... क्रियते । (पायसेन, चर्वादिना, आज्येन, तण्डुलेन)

(ग) पूर्णाहूतौ ......... नामाग्निः । (मृडः, दारुणः, बलदः, शोभनः)

(घ) .......... संस्रवप्राशनं करोति । (आचार्यः, ब्राह्मणः, यजमानः, होता)

(ङ) हविःप्रदानस्योत्तमा मुद्रा ...... । (वरदा, हंसी, मृगी, शूकरी)

**५. पाठ्यांशमाधृत्य रिक्तस्थानं पूरयत**

(क) पावकं द्विजरूपं च ......................... ।
.................................संयुतम् ॥

(ख) काली कराली च........................... ।
.................चण्डी.................जिह्वा ॥

(ग) ब्राह्मणाः सुन्तु मे...................... ।
वेदानां .....................सर्वदेहिनाम् ॥

(घ) देवदानव........................महोदधौ ।

................................स्वयम् ॥

(ङ) ............स्फटिकप्रभाय ............. ।

सुपाशहस्ताय......................नमस्ते ॥

(च) ....................आग्नेय्यां धरणीधरः ।

याम्यां.............................नैर्ऋते ॥

**६. प्रश्नान् समुत्तरयत**

(क) पञ्चगव्यप्राशनं किमर्थम् ? पञ्चगव्यसम्मेलनमन्त्रप्रतीकान् दर्शयत ।

(ख) पञ्चभूसंस्काराणां नामान्युल्लिख्य यज्ञियभूमिः कथं संस्क्रियते ? प्रतिपादयत ।

(ग) स्वस्तिवाचनमन्त्राः कति सन्ति ? तेषां प्रतीकमात्रं लेख्यम् ।

(घ) ऋग्वेदादीनां पूजा कुत्र भवति ? समन्त्रं लिखत ।

(ङ) अग्नेः सीमन्तोन्नयनसंस्कारे विनियुक्तो मन्त्रः कः ? लिखत ।

(च) पात्रासादनं केन मन्त्रेण विधीयते ?

(छ) 'समिधाग्निम्' अस्य मन्त्रस्य विनियोजनस्थलं निर्दिशत ।

(ज) स्रुवसम्मार्जनमन्त्रः कः ?

(झ) विष्णुपूजनमन्त्रो लेख्यः ।

(ञ) "चत्वारि शृङ्गा" अस्य कुत्र विनियोगः ?

(ट) ब्राह्मणवरणे प्रयोज्यमानानि द्रव्याणि कानि ? ग्रन्थाधारेण लेख्यानि ।

(ठ) पुण्याहवाचनसङ्कल्पवाक्यं लिखत ।

(ठ) दीपपूजनमन्त्रं पूरयत ।

(ढ) स्रुवसंस्कारः कथं क्रियते ?

(ण) "काण्डात्काण्डात्" अस्य मन्त्रस्य विनियोगस्थलं निर्दिश्य मन्त्रं च पूरयत ।

(त) "स्वराडसि" अस्य विनियोगस्थलं विचार्यताम् ।

(थ) पञ्चायतनदेवताहोममन्त्राणां प्रतीकानि लेखनीयानि ।

(द) "पयः पृथिव्याम्" "क्षत्रस्य योनिः" "योगे योगे तवस्तरम्" इति प्रतीकात्मकाः मन्त्राः कुत्र कुत्र विनियुज्यन्ते ?

(ध) पूर्णपात्रपूजनमन्त्रो समुल्लेख्यः ।

(न) यज्ञान्तगोदानवाक्यं रचयत ।

(प) पात्रासादने विधेयानि कार्याणि कानि ?

(फ) पवित्रनिर्माणविधिं निरूपयत ।

(ब) होमसङ्कल्पवाक्यं रचयत ।

**प्रयोगाभ्यासः**

१. स्वस्तिवाचनमन्त्राणां सस्वरं वाचनं कुरुत ।

२. पाठ्यांशगतान् मन्त्रान् स्तोत्राँश्च कक्षायां श्रावयत ।

३. विद्यालयस्य प्राङ्गणे हवनकर्मणो रङ्गवल्लीं विरचय्य प्रदर्शयत ।

४. शिक्षकस्य साहाय्येन कुशद्वारा पवित्रादिनिर्माणाभ्यासं कुरुत ।

५. वेद्यां समिधां स्थापनक्रमं प्रदर्शयत ।

६. सर्वे सखायो मिलित्वा सामग्रीः सङ्कलय्य विद्यार्थिसमूहादेव ब्रह्महोत्राचार्ययजमानादीन् नियोज्य शिक्षकमग्रे कृत्वा हवनकर्मण आयोजना विधेया ।

७. सङ्ग्रहालयं गत्वा प्रत्यक्षतः यन्त्रेण वा यथासम्भवं स्फ्यस्रुवादियज्ञियपात्राणां यज्ञशालायाश्चावलोकनं करणीयम् ।

८. युष्माकं गृहे समुदाये वाऽऽयोजिते होमकर्मणि भागं गृहीत्वाऽभ्यासो विधेयः ।

# २ गर्भाधानम्

तत्र प्रसङ्गाद्रजस्वलाधर्मानाह व्यासः -

**रजसो दर्शनान्नारी सर्व्वमेव परित्यजेत् ।**

**सर्वैरलक्षिता शीघ्रं लज्जिता स्वगृहे वसेत् ॥**

**एकाम्बरधरा दीना स्नानालङ्कारवर्जिता ।**

**मौनिन्यधोमुखी चक्षुःपाणिपद्भिरचञ्चला ॥**

**अश्नीयात् केवलं नक्तं भक्तं मृण्मयभाजने ।**

**स्वपेद् भूमावप्रमत्ता क्षपेदेवमहस्त्र्यहम् ॥**

**स्नायादथार्तववती सचैलाऽनुदिते रवौ ।**

**विलोक्य भर्तृवदनं शुद्धा भवति धर्मतः ॥**

**अनूढा मातृवदनदर्शनाच्छुद्धिमाप्नुयात् ।**

**शुद्धा भवेच्चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ॥**

**दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुद्ध्यति ।**

अथ स्नानानन्तरं पुनरपि रजोदर्शने जाते शुद्धा एवेत्याहापस्तम्बः -

**रजस्वला यदा स्नाता पुनरेव रजस्वला ।**

**अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥**

॥ इति ॥

## गर्भाधानप्रयोगः –

तत्र प्रथमरजोदर्शने जाते प्रातर्भर्ता अभ्यङ्गपूर्वकं स्नात्वा सर्वौषधिसप्तमृत्तिकापञ्च-त्वक् पञ्चपल्लवसहितकलशोदकेन वधूं स्नापयित्वा अहते धौते वाससी परिधाय स्वासने समुपविश्याचम्य अर्घ्यं संस्थाप्य प्राणायामं कृत्वा सङ्कल्पं कुर्यात् ।

### (क) सङ्कल्पः

ॐ अद्येहेत्यादि (अमुक)गोत्रः (अमुक)प्रवरः (अमुक)राशिः (अमुक)शर्मा/वर्मा/गुप्तः/दासः अहम् (अमुक)राशेरस्या वध्वाः संस्कारातिशयद्वारा अस्यां जनिष्यमाणसर्वगर्भाणां बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीतये गर्भाधानसंस्कारं करिष्ये । तत्पूर्वाङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं मातृपूजननान्दीश्राद्धपुण्याहवाचनानि च करिष्ये ।

इति सङ्कल्प्य यथोक्तपूजाविधानानि सम्पाद्य रात्रौ ज्योतिःशास्त्रोक्ते सुमुहूर्ते गर्भाधानं कुर्यात् ।

### (ख) गर्भाधाने नियमाः

**यस्मिन्नृक्षे भवेद्गर्भस्तस्माद्यद्दशमं भवेत् ।**

**तत्रापत्यं प्रजायेत तस्मादृक्षत्रयं त्यजेत् ॥**

**पित्र्यं पौष्णं च ज्येष्ठां च यत्नतो वर्जयेद्बुधः ।**

**षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥**

षष्ठदिनस्य युग्मत्वेऽपि "**षष्ठयां स्यान्मध्यमः सुतः**" इति वचनात् षष्ठं दिनं त्याज्यम् ।

तस्माद्रजोदर्शनादारभ्य चतस्रो रात्रीस्त्यक्त्वा पञ्चमीसप्तम्यौ अयुग्मत्वाद् षष्ठीञ्च निषिद्धत्वात् सन्त्यज्य अष्टमीमारभ्य षोडशीपर्यन्तं युग्मासु रात्रिषु चन्द्रतारानुकूलासु मघा-रेवती-ज्येष्ठानक्षत्रवर्जितासु अनुरागिणीं स्वलङ्कृतां स्त्रियं स्वयं च स्वलङ्कृतो द्विगुणानुरागः सुलग्ने रात्रौ गर्भाधानं कुर्यात् । पुत्रीकामस्तु विषमरात्रौ गर्भाधानं कुर्यात् ।

### (ग) तत्र मन्त्रपाठः

**ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥**

**गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं तेऽश्विनौ देवावाधत्तां पुष्करस्रजौ ॥**

**ॐ हिरण्मयीऽअरणी याभ्यान्निर्मन्थतामश्विनौ देवौ । तं ते गर्भं दधामहे दशमे मासि सूतवे ॥**

**ॐ रूपं रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।**

**इन्द्रो मायाभिः पुरुरूप ईयते युक्त्वा ह्यस्य हरयः शता दश ॥**

इति पठित्वाऽभिगमनं कुर्यात् । ततः शौचं विधायाचम्य वध्वा दक्षिणांसस्योपरि हस्तं नीत्वा हृदयमालभते ।

### (घ) हृदयालम्भनम्

**ॐ यत्ते सुसीमे हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद्विद्यात् पश्येम शरदः शतञ्जीवेम शरदः शतꣳशृणुयाम शरदः शतम् ॥**

इति पठित्वा ताम्बूलचर्वणं कुर्वीत इति । एवं यदि गर्भं न दधाति तत्रोपायमाह ।

### (ङ) गर्भाधानोपायाः

सैंह्याः श्वेतपुष्पिकामूलं मूलनक्षत्रे उत्पाटच उदपेषं पिष्ट्वा चतुर्थेऽहनि स्नातायां निशायां वध्वा दक्षिणस्यां नासिकायामासिञ्चति । तत्र मन्त्रः -

**ॐ इयमौषधीस्त्रायमाणा शरावती सहमान अस्यामहं बृहत्याः पुत्रः पितुरिव जाग्रभम् ॥**

द्वितीयोपायमाह- पिण्डपितृयज्ञेऽनवघ्रातं मध्यमं पिण्डं पत्नीं प्राशयेत् । तत्र मन्त्रः -

**ॐ आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोऽसत् ॥**

तृतीयोपायमाह- नित्यहोमात्पूर्वं स्त्री एकामाहुतिं जुहुयात् । तत्र मन्त्रः -

**ॐ पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ । पुमानिन्द्रश्च सूर्य्यश्च पुमांस वर्द्धतां मयि स्वाहेति** ॥

ततो योनिस्फुरणादिना गर्भाधानं जातमिति निश्चित्य व्यायामातिभोजनदिवास्वापा-रोहणकुक्कुटासनादीनि वर्जयेत् । ततः प्रातर्दक्षिणां दद्यात् ॥

॥ इति गर्भाधानसंस्कारः ॥

## अभ्यासः

**१. शब्दार्थान् लिखत**

सप्तमृत्तिका । अहते वाससी । निशा । अंसः । उत्पाट्य । ताम्बूलम् ।

**२. अधस्तनशब्दान् प्रयुज्य वाक्यरचना विधेया**

प्रातः । पिष्ट्वा । स्वापः । अहनि । रात्रौ ।

**३. प्रश्नान् समुत्तरयत**

(क) रजोवती नारी कदा शुद्ध्यति ?

(ख) गर्भाधाने वर्ज्यनक्षत्राणि कानि ?

(ग) गर्भाधानकालः कः ? निरूपयत ।

(घ) हृदयालम्भनमन्त्रो समुल्लेखनीयः ।

**प्रयोगाभ्यासः**

मुहूर्तचिन्तामण्यादिग्रन्थान् अनुसृत्य गर्भाधानमुहूर्तो विचारणीयः ।

# ३ पुंसवनम्

तत्र पारस्करसूत्रम्- मासे तृतीये पुंसवनं कुर्यात् । तत्र गर्भाधानप्रभृति तृतीये मासि पुंनक्षत्रे (यस्मिन्दिने पुष्यश्रवणहस्तमृगशीर्षादिनक्षत्रयोगे चन्द्रमा भवति) चन्द्रतारानुकूले गर्भिणीं संस्नाप्य तत्पतिः स्वयं च स्नात्वा उभावप्युपोषितौ अहते धौते वाससी परिधाय प्रथमं गणेशादीन् सम्पूजयेत् । तत्रादौ प्रतिज्ञासङ्कल्पं कुर्यात् ।

## (क) सङ्कल्पः

अद्येह अमुकगोत्रोऽमुकोऽहं ममास्यां भार्यायां उत्पत्स्यमानस्य गर्भस्य बीजगर्भ-समुद् भवैनोनिबर्हणपुंरूपोदयप्रतिरोधिकर्मनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्ये । तत्र च पुंसवनकर्मणः पूर्वाङ्गत्वेन मातृपूजानान्दीश्राद्धपुण्याहवाचनानि करिष्ये ।

इति सङ्कल्प्य मातृपूजादिकं विधाय अस्तमये वटवृक्षस्यावरोहान्मूलाकारान् तदभावे कुशमूलं वा उदकेन पिष्ट्वा तद्रसं गर्भिण्या दक्षिणनासिकायामासिञ्चति ।

## (ख) आसिञ्चनमन्त्राः

तत्र दक्षिणनासिकासिञ्चने मन्त्रः -

**ॐ हिरण्यगर्ब्भः समवर्त्तताग्रे भूतस्य जातः पतिरेकऽआसीत् । स दाधार पृथिवीन्द्यामुतेमाङ्कस्मै देवाय हविषा व्विधेम ।**

ततो वामनासिकायाम् -

**ॐ अद्भ्यः सम्भृतः पृथिव्यै रसाच्च व्विश्वकर्म्मणः समवर्त्तताग्रे । तस्य त्वष्टा व्विदधद्रूपमेति तन्मर्त्यस्य देवत्वमाजानमग्रे ॥**

इति मन्त्राभ्यां उदरप्राप्तिक्षममासिञ्चेत् । सा यदि वीर्यवानयं पुत्रः स्यादिति कामयेत तदा उदकपूर्णं शरावम् उपस्थे धृत्वा गर्भाभिमन्त्रणं कुर्यात् ।

## (ग) गर्भाभिमन्त्रणम्

तत्र मन्त्रः - **ॐ सुपर्णोसि गरुत्माँस्त्रिवृत्ते शिरो गायत्रञ्चक्षुर्बृहद्रथन्तरे पक्षौ ॥ स्तोमऽआत्मा छन्दाꣳस्यङ्गानि यजूꣳषि नाम ॥ साम ते तनूर्व्वामदेव्यं यज्ञायज्ञियं पुच्छं धिष्ण्याः शफाः । सुपर्णोसि गरुत्मान् दिवं गच्छ स्वः पत ॥**

इति मन्त्रेण गर्भाभिमन्त्रणं कृत्वा दक्षिणासङ्कल्पं कुर्यात् ।

## (घ) दक्षिणासङ्कल्पः

ॐ अद्येहामुकोऽहं कृतस्यास्य पुंसवनाख्यकर्मणः साद्गुण्यार्थम् इमां दक्षिणां भोजनं च नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दातुमहमुत्सृजे । ॐ तत्सन्न मम ।

ततोऽभिषेकमन्त्रपाठादिः ।

॥ इति पुंसवनसंस्कारः ॥

## अभ्यासः

१. **शब्दार्थान् लिखत**

पुंसवनम् । उदरम् । उपस्थः । आसिञ्चति ।

२. **अधस्तनशब्दान् प्रयुज्य वाक्यरचना विधेया**

वाससी । नासिका । उदकम् । विभज्य ।

## ३. प्रश्नान् समुत्तरयत

(क) पुंसवनाख्यं कर्म कदा भवति ?

(ख) पुंसवने ग्राह्यनक्षत्राणि कानि ?

(ग) नासिकासिञ्चनविधिं लिखत ।

(घ) गर्भाभिमन्त्रमन्त्रो लेख्यः ।

(ङ) पुंसवने विधेयानि कार्याणि लिखत ।

**प्रयोगाभ्यासः**

कक्षायां विद्यार्थिनमेकं गर्भिणीं भार्याम् अपरञ्च भर्तारं मत्वा पुंसवनसंस्कारे विधेयानि नासिकासिञ्चन-गर्भाभिमन्त्रणादीनि कर्माणि प्रयोगेण सम्पादयत ।

# ४ सीमन्तोन्नयनम्

गर्भाधानप्रभृतिः पञ्चमे मासे चन्द्रतारानुकूले दिवसे पूर्वं दीपकलशगणेशपूजनं कृत्वा प्रधानसङ्कल्पं कुर्यात्-

### (क) प्रधानसङ्कल्पः

अद्येहामुकोऽहम् अस्यां भार्यायां गर्भाभिवृद्धिपरिपन्थिपिशितप्रिया-ऽलक्ष्मीभूतराक्षगणनिरसनक्षमसकलसौभाग्यनिदानभूतलक्ष्मीसमावेशनद्वारा प्रतिगर्भं बीजगर्भसमुद्भवैनोनिबर्हणाय श्रीपरमेश्वरप्रीत्यर्थं स्त्रीसंस्काररूपं सीमन्तोन्नयनाख्यं कर्म करिष्ये ।

इति सङ्कल्प्य मातृपूजनादिकं विधाय तत्र बहिः शालायां स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य तदीशाने कलशविधिना कलशं संस्थाप्य तत्र नवग्रहादीनावाह्य सम्पूज्य रक्षासूत्रमभिमन्त्र्य कलशे संस्थाप्य अग्नेः पश्चात्स्वदक्षिणतो गर्भिणीं स्त्रियमुपवेश्य आचार्यब्रह्मणोर्वरणं कृत्वा ब्रह्मोपवेशनादि आसादनान्ते विशेषोपकल्पनीयानि वस्तून्यासादयेत् ।

### (ख) विशेषोपकल्पनीयानि वस्तूनि

आज्यस्थाली, चरुस्थाली, आज्यं, मुद्गाः तिलाः पृथक्पृथक् मृदुपीठयुग्मम्, शलाटुग्रप्सम् (औदुम्बरफलयुग्ममपक्वमित्यर्थः) एकस्तवककविवद्धं च पवित्रलक्षणास्तिस्रो दर्भपिञ्जुल्यश्च, त्रैणी शलली, वीरतरशंकुः, शरैषिका अश्वत्थशंकुर्वा, पूर्णपात्रम्, सूत्रपूर्णलोहकीलकम् (सूत्रकर्त्तनसाधनमित्यर्थः), वीणागाथिनौ च ।

इति सम्भारान् सम्भृत्य पवित्रच्छेदनादिपर्यंक्षणान्तं कर्म कृत्वा चरुमधिश्रयेत् । अर्धश्रितेषु चरुषु तिलमिश्रिततण्डुलान् क्षिपेत् । एवं चरुं श्रपयित्वा चरुम् आज्यं चोद्वास्य ततो द्रव्यत्यागं कुर्यात् ।

## (ग) होमसङ्कल्पः

अद्येहास्मिन् सीमन्तहोमकर्मणि आज्येन आघाराज्यभागदेवताभ्यः तिलमिश्रितमुद्गस्थालीपाकेन प्रजापतिं स्विष्टकृतं तथाज्येन भूरादिनवाहुतीर्यक्ष्ये ।

## (घ) अग्नेः स्थापनं पूजनञ्च

अग्निप्रतिष्ठापनान्ते मङ्गलनामाग्ने सुप्रतिष्ठितो वरदो भव **ॐ मङ्गलनामाग्नये नमः** इति पाद्यादिभिः सम्पूज्य आघारावाज्यभागौ हुत्वा स्थालीपाकेनाज्यमिश्रितेन जुहोति ।

## (ङ) हवनम्

**ॐ प्रजापतये स्वाहा इदं प्रजापतये** । ततः **ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते** । तत आज्येन भूरादिहोमं कृत्वा संश्रवप्राशनादि पूर्णपात्रदानं होमदक्षिणां च विधाय ततोऽग्नेः पश्चाद्भर्त्तुर्वामतो भद्रपीठोपरि मृद्वासने स्थितायाः स्त्रियाः सीमन्तकेशे अपक्वोदुम्बरफलयुग्मेन एकगुच्छेन त्रिभिर्दर्भपिञ्जुलीभिस्त्रेण्या शलल्या शरैषिकया पूर्णलोहकीलकेन ललाटान्तरमारभ्य द्विधा करोति ।

## (च) केशविनयनम्

तत्र मन्त्राः - **ॐ भूर्विनयामि, ॐ भुवर्विनयामि, ॐ स्वर्विनयामि** इति त्रिर्विनयनं कृत्वा अथ उदुम्बरादिपञ्चकं पुञ्जीकृतं तस्या वेण्यामाबध्नाति - **ॐ अयमूर्ज्जावतोव्वृक्षऽऊर्ज्जीव फलिनी भव** इति मन्त्रेण बध्नीयात् '**वेण्यां त्रिवृत्कुर्य्यात्**' इत्युक्तत्वात् । अथ वीणागाथिनं प्रेषयति- **ॐ सोमं राजानं गायेथां यो वाप्यन्यो वीरतर** इति तौ प्रेषितौ वीणामादाय स्वदेशीयराज्ञोऽथवा कस्यचिदन्यस्य वीरनृपस्य चरितं गायतः सोमं राजानमन्यं युधिष्ठिरार्जुनादिकं वा गायतः ।

## (छ) वीरगाथागानम्

"**ॐ सोम एव नो राजेमा मानुषीः प्रजाः । अविमुक्तचक्र आसीरंस्तीरे तुभ्यमसौ** ।" इति पठेत् । ततो गर्भिणीसमीपे गङ्गादिनदीनां नाम गृह्णीयात् ।

### (ज) दक्षिणादानम्

अद्येहामुकोऽहं अस्या भार्यायाः सीमन्तोन्नयनाख्यकर्मणः साद्गुण्यार्थम् इमां दक्षिणां ..... गोत्राय ..... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

इति दक्षिणां दत्त्वा अभिषेकतिलकरक्षासूत्रघृतच्छायात्र्यायुषमन्त्रपाठादिकं च कारयेत् ॥

॥ इति सीमन्तोन्नयनम् ॥

## अभ्यासः

**१. शब्दार्थान् लिखत**

सीमन्तोन्नयनम् । अश्वत्थः । उद्वास्य । स्थालीपाकः । दर्भपिञ्जुली ।

**२. शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

बहिः । पश्चात् । शलल्या । उदुम्बरः । सीमन्तः ।

**३. प्रश्नान् समुत्तरयत**

(क) सीमन्तोन्नयनं कदा क्रियते ?

(ख) केशविनयनं कथं विधीयते ?

(ग) संक्षेपेण सीमन्तोन्नयनविधिं निरूपयत ।

**प्रयोगात्मकः**

कक्षायां विद्यार्थिनमेकं भार्याम् अपरञ्च भर्तारं मत्वा केशविनयनप्रकारं प्रदर्शयत ।

# ५ जातकर्म

तत्र तावत्सुखप्रसवार्थं सोष्यन्तीकर्म ।

सोष्यन्तीं (प्रसवशूलवतीं) प्रसवोन्मुखीं स्त्रियमद्भिरभ्युक्ष्यति ।

## (क) अद्भिरभ्युक्षणम् –

ॐ एजत्विति प्रजापतिर्ऋषिः पंक्तिश्छन्दः गर्भो देवता अभ्युक्षणे विनियोगः ।

**ॐ एजतु दशमास्यो गर्भो जरायुणा सह । यथायं वायुरेजति यथा समुद्रऽएजति । एवायं दशमास्योऽअस्रज्जरायुणा सह ॥** इत्यभ्युक्ष्य मन्त्रं जपेत् ।

## (ख) मन्त्रजपः –

ॐ अवैत्विति प्रजापतिर्ऋषिः पङ्क्तिश्छन्दः उल्बं देवता जपे विनियोगः ।

**ॐ अवैतु पृश्नि शेवलꣳशुने जराय्वत्तवे नैवमाꣳसेन पीबरीम् । न कस्मिंश्चनायतमपजरायु पद्यताम् ॥** इति पठेत् । एतच्च गर्भमात्रविमोक्षणे कार्यम् ॥

## (ग) जातकर्म

अथ सन्ततौ जाते पिता शीघ्रं सचैलं स्नायात् । तत्र सङ्कल्पः-

ॐ अद्येहामुकोऽहं पुत्र/पुत्रीजननिमित्तकं सचैलं स्नानं करिष्ये ।

इति सङ्कल्प्य स्नात्वा शुभे नवे धौते वाससी परिधायाचम्य प्राङ्मुख उपविश्याचम्य पूजासामग्रीं सम्पाद्य नालच्छेदनात्पूर्वं दीपकलशगणेशपूजनं कुर्यात् । अद्येहामुकोऽहं जातस्य/जातायाः

पुत्रस्य/पुत्र्या दीर्घायुरारोग्यावाप्तये करिष्यमाणजातकर्मणि निर्विघ्नताकार्यसिद्धये पूर्वाङ्गत्वेन दीपकलशगणेशपूजनं करिष्ये । इति सङ्कल्प्य यथाविधि गणेशादीन् सम्पूज्य दक्षिणां दत्त्वा प्रधानसङ्कल्पं कुर्यात् ।

### (घ) प्रधानसङ्कल्पः

अद्येहेत्यादि सङ्कीर्त्य अमुकोऽहमस्य शिशोर्गर्भाम्बुपानजनितसकलदोषनिवृत्यर्थम् आयुर्मेधादिवृद्ध्यर्थं बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं जातकर्माख्यं कर्म करिष्ये ।

### (ङ) मातृकापूजा

अद्येहामुकोऽहं पुत्रजननिनिमित्तकं गौर्यादिषोडशमातृकाणां पूजनं करिष्ये । इति सङ्कल्प्य तासां पूजनं विधाय वसोर्धाराः पातयित्वा आभ्युदयिकश्राद्धं हेम्ना विदध्यात् ।

### (च) नान्दीश्राद्धम्

तत्र नान्दीश्राद्धं हेम्ना कुर्यात् ।

**सङ्कल्पः-** ॐ अद्येहेत्यादि अमुकसगोत्राणामस्मन्मातृपितामहीप्रपितामहीनाम् अमुकामुकामुकदेवीनां नान्दीमुखीनां तथामुकसगोत्राणामस्मत्पितृपितामहप्रपितामहानाम् अमुकामुकामुकशर्मणां तथामुकगोत्राणामस्मन्मातामहप्रमातामहवृद्धप्रमातामहानाम् अमुकामुकामुकशर्मणां सपत्नीकानां नान्दीमुखानां सत्यवसुसंज्ञकविश्वेदेवपूर्वकं संक्षिप्तसङ्कल्पविधानेन पुत्र/पुत्रीजनननिमित्तं नान्दीमुखश्राद्धं करिष्ये ।

इति सङ्कल्प्य नान्दीश्राद्धं विधाय पुण्याहं वाचयेत्, यथा-

अमुकोऽहं जातस्य शिशोः करिष्यमाणजातकर्मकर्मणि सकलमङ्गलाभिवृद्ध्यर्थं ब्राह्मणद्वारा पुण्याहं वाचयिष्ये । तदङ्गत्वेन चतुर्णां ब्राह्मणानां पूजनं वरणञ्च करिष्ये ।

## (छ) स्वस्तिवाचनम् नवग्रहाणां पूजनञ्च

ततो मङ्गलमन्त्रान् वाचयित्वा कलशे नवग्रहाणामावाहनपूर्वकं सम्पूज्य शिशोर्मेधाजननाख्यं कर्म कुर्यात्।

## (ज) मेधाजननाख्यं कर्म

तत्र सुवर्णादितैजसे पात्रे मधुघृते कृत्वा सुवर्णान्तर्हितयाऽनामिकयाऽऽदाय जातं शिशुं सकृत्प्राशयति (मेलयित्वा जातस्य जिह्वामनुमार्ष्टीत्यर्थः)। तत्र मन्त्राः -

**ॐ भूस्त्वयि दधामि। ॐ भुवस्त्वयि दधामि। ॐ स्वस्त्वयि दधामि।**

**ॐ भूर्भुवः स्वः सर्वं त्वयि दधामि।** इति सकृत् प्राशयेदिति मेधाजननम्।

## (झ) आयुष्यकरणम्

जातस्य नाभिसमीपे दक्षिणकर्णसमीपे वा जपति -

**ॐ अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ १॥**

**ॐ सोमऽआयुष्मान्त्सऽओषधीभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ २॥**

**ॐ ब्रह्माऽऽयुष्मत्तद् ब्राह्मणैरायुष्मत् तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ३॥**

**ॐ देवाऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ४॥**

**ॐ ऋषयऽआयुष्मन्तस्ते व्रतैरायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ५॥**

**ॐ पितरऽआयुष्मन्तस्ते स्वधाभिरायुष्मन्तस्तेन त्वाऽऽयुषाऽयुष्मन्तं करोमि॥ ६॥**

**ॐ यज्ञऽआयुष्मान् स दक्षिणाभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ७॥**

**ॐ समुद्रऽआयुष्मान्त्स स्रवन्तीभिरायुष्मांस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि॥ ८॥**

ततः -

**ॐ त्र्यायुषञ्जमदग्नेः कश्यपस्य त्र्यायुषम् । यद्देवेषु त्र्यायुषन्तन्नोऽअस्तु त्र्यायुषम् ॥**

इति च त्रिः सकृद्वा जपेदिति एतदायुष्यकरणम् ।

## (ञ) जाताभिमन्त्रणम्

शिशोः सर्वायुःप्राप्तिकामनया दिवस्परीत्येकादशभिर्मन्त्रैः पिता शिशुं सर्वाङ्गेष्वभिमृशति, मन्त्राश्च यथा -

**विनियोगः** - दिवस्परीत्येतस्याऽनुवाकस्य वत्सप्रीतिर्भलन्दन ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता जाताभिमन्त्रणे विनियोगः ।

**ॐ दिवस्परि प्रथमं जज्ञे अग्निरस्मद्द्वितीयं परि जातवेदाः ।**

**तृतीयमप्सु नृमणाऽअजस्रमिन्धानऽएनं जरते स्वाधीः ॥१॥**

**ॐ विद्मा तेऽअग्ने वेधा त्रयाणि विद्मा ते धाम बिभृता पुरुत्रा**

**विद्मा ते नाम परमं गुहा यद्विद्मा तमुत्सं यत ऽआजगन्थ ॥२॥**

**ॐ समुद्रे त्वा नृमणाऽअप्स्वन्तर्नृचक्षा ईधे दिवोऽअग्नऽ ऊधन् ।**

**तृतीये त्वा रजसि तस्थिवाँसमपामुपस्थे महिषाऽअवर्द्धन् ॥३॥**

**ॐ अक्रन्ददग्निस्तनयन्निव द्यौः क्षामा रेरिहद्वीरुधः समञ्जन् ।**

**सद्यो जज्ञानो व्वि हीमिद्धोऽअख्यदारोदसी भानुना भात्यन्तः ॥४॥**

**ॐ श्रीणामुदारो धरुणो रयीणां मनीषाणां प्रार्पणः सोमगोपाः ।**

**व्वसोः सूनुः सहसोऽअप्सु राजा विभात्यग्रऽउषसामिधानः ॥५॥**

**ॐ व्विश्वस्य केतुर्भुवनस्य गर्भऽआ रोदसीऽअपृणाज्जायमानः ।**

**व्वीडुञ्चिदद्रिमभिनत्परायञ्जना यदग्निमयजन्त पञ्च ॥६॥**

**ॐ उशिक्पावकोऽरतिः सुमेधा मर्त्त्येष्वग्निरमृतो निधायि ।**

**इयर्ति धूममरुषं भरिभ्रदुच्छुक्रेण शोचिषा द्यामिनक्षन् ॥७॥**

**ॐ दृशानो रुक्मऽउर्व्या व्यद्यौद् दुर्म्मर्षमायुः श्रिये रुचानः ।**

**अग्निरमृतोऽअभवद्योभिर्यदेनं द्यौरजनयत्सुरेताः ॥८॥**

**ॐ यस्तेऽ अद्य कृणवद्भद्रशोचेऽपूपन्देव घृतवन्तमग्ने ।**

**प्र तन्नय पतरं वस्यऽअच्छाभि सुम्नं देवभक्तं यविष्ठ ॥९॥**

**ॐ आ तं भज सौश्रवसेष्वग्नऽउक्थऽउक्थऽआभज शस्यमाने ।**

**प्रियः सूर्य्ये प्रियोऽ अग्ना भवात्युज्जातेन भिनददुज्जनित्वैः ॥१०॥**

**ॐ त्वामग्ने यजमानाऽअनुद्यून्विश्वा व्वसु दधिरे वार्य्याणि ।**

**त्वया सह द्रविणमिच्छमाना व्व्रजं गोमन्तमुशिजो व्विववव्रुः ॥११॥**

इति एकादशर्चः पठित्वा अस्ताव्यग्निरिति द्वादशीमृचं न पठेत् ।दिवस्परीत्येतस्यानुवाकस्योत्तमामृचं परिशिनष्टीति पारस्करः ।)

## (ट) प्रैषवाक्यपठनम्

अथ शिशोः पूर्वादिचतुर्दिक्षु मध्ये च ब्राह्मणान् संस्थापयेत् । चत्वारश्चतुर्दिक्षु पञ्चमो मध्ये नैर्ऋत्यां वा स्थाप्यः "इममनुप्राणित" इति प्रैषं तान्प्रति ब्रूयात् । ततः पूर्वदिक्स्थितो विप्रः शिशुसम्मुखं तिष्ठन् तं संलक्ष्य 'प्राण' इति तारस्वरं ब्रूयात् । दक्षिणदिक्स्थितोऽपि तथा तिष्ठन् 'व्यान' इति ब्रूयात् ॥ पचिमदिक्स्थितोऽपि तथैव 'अपान' इति ब्रूयात् । उदक्संस्थित 'उदान' इति ब्रूयात् । मध्यमस्तूपरिष्टादवेक्ष्यमाणः 'समान' इति ब्रूयात् । पञ्च ब्राह्मणाभावे पिता स्वयमेव तत्र तत्र गत्वा शिशोरभिमुखो प्राण इत्यादि ब्रूयात् । अस्मिन्पक्षे प्रैषो न भवति । अथ यस्मिन्देशे शिशुर्जातस्तं देशमनामिकया स्पृशन् एतं मन्त्रं पठन्परामृशति ।

## (ठ) जन्मभूम्यभिमन्त्रणम्

तत्र मन्त्रः -

ॐ वेद ते भूमिर्हृदयमित्यस्य पंक्तिश्छन्दः पृथिवी देवता जन्मभूम्यभिमन्त्रणे विनियोगः ।

**ॐ वेद ते भूमिर्हृदयं दिवि चन्द्रमसि श्रितम् । वेदाहं तन्मां तद् विद्यात्पश्येम शरदः शतञ्जीवेम शरदःशतꣳश्रृणुयाम शरदः शतम् ॥**

इति भूमिमभिमन्त्र्य शिशुं स्पृष्ट्वा जपति -

**ॐ अश्मा भव परशुर्भव हिरण्यमस्रुतं भव । आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।**

अथास्य मातरं दृष्ट्वा जपति -

**ॐ इडासि मैत्रावरुणी वीरे वीरमजीजनथाः । सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरत् ॥**

## (ड) स्तनप्रदानम्

अथ शिशोर्मातुर्दक्षिणं स्तनं प्रक्षाल्य शिशवे प्रयच्छति -

ॐ इमꣳस्तनमूर्ज्जस्वन्तमिति परमेष्ठी ऋषिः त्रिष्टुप्छन्दः अग्निर्देवता स्तनप्रदाने विनियोगः ।

**ॐ इमꣳस्तनमूर्ज्जस्वन्तं धयापां प्रपीनमग्ने शरीरस्य मध्ये । उत्सञ्जुषस्व मधुमन्तमर्व्वन्त्समुद्रियꣳसदनमा विशस्व ॥**

ततो वामं स्तनं प्रक्षाल्य प्रयच्छति ।

ॐ यस्ते स्तन इति दीर्घतमा ऋषिस्त्रिष्टुप्छन्दः गौर्देवता स्तनप्रदाने विनियोगः ।

**ॐ यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवेऽकः । उर्व्वन्तरिक्षमन्वेमि ॥**

## (ढ) उदककुम्भस्थापनम्

अथ शिशोः शिरःप्रदेशे जलपूर्णं कुम्भं दशदिनपर्यन्तं निदधाति ।

ॐ आपो देवेष्वित्यस्य प्रजापतिर्ऋषिरनुष्टुप्छन्द आपो देवताः सूतिकायाः शिरःप्रदेशे रक्षार्थोदककुम्भस्थापने विनियोगः ।

**ॐ आपो देवेषु जाग्रथ यथा देवेषु जाग्रथ । एवमस्यां सूतिकायां सपुत्रिकायां जाग्रथ ॥**

तत्पात्रं सूतिकोत्थापनपर्यन्तं तत्रैव तिष्ठति ।

## (ण) सूतिकाद्वारदेशेऽग्निस्थापनं हवनञ्च

ततः सूतिकाद्वारदेशे वेदीं कृत्वा सूतिकाग्निमुपसमाधाय पञ्चभूसंस्कारपूर्वकमग्निं संस्थाप्य (अत्र प्रणीताप्रणयनादयो न भवन्ति, पञ्चभूसंस्कारास्तु भवन्त्येव) स्थापितमग्निं 'एतन्ते' इति प्रतिष्ठाप्य प्रगल्भनामाग्निमावाह्य **ॐ अग्नये नमः** इति पाद्यादिभिः सम्पूज्य होमं कुर्यात् ।

तण्डुलफलिकाकणतुषमिश्रान्सर्षपान्गृहीत्वा -

ॐ शण्डामर्का इति प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाद्वाराग्नौ तण्डुलफलिकाकणतुषमिश्रसर्षपहोमे विनियोगः ।

**ॐ शण्डा मर्का उपवीरः शौण्डिकेयऽउलूखलः मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा ॥ इदमग्नये न मम ।**

**इदं शण्डामर्कोपवीरशौण्डिकेयोलूखलमलिम्लुचद्रोणासश्च्यवनेभ्यः,** इति प्रथमाहुतौ त्यागः ।

ॐ आलिखन्निति प्रजापतिर्ऋषिरनुष्टुप्छन्दोऽग्निर्देवता सूतिकाग्नौ तण्डुलफलिकाकणतुषमिश्रसर्षपहोमे विनियोगः ।

**ॐ आलिखन्ननिमिषः किं वदन्तऽउपश्रुतिः हर्य्यक्षः कुम्भीशत्रुः पात्रपाणिर्नृमणिः । हन्त्रीमुखः सर्षपारुणश्च्यवनो नश्यतादितः स्वाहा ॥ इदमग्नये न मम ।**

**इदमालिखन्ननिमिषकिंवदन्तऽउपश्रुतिहर्यक्षकुम्भीशत्रुपात्रपाणिनृमणिहन्त्रीमुखसर्षपारुणच्यवनेभ्यः,** इति द्वितीयाहुतौ त्यागः ।

अस्मिन् होमे कुशकण्डिका न भवति । स चाग्निरुत्थानपर्यन्तं दशदिनावधि यथा निर्वापितो न भवति तथा कार्यम् । उत्थापनं च दशमदिन एव । एता आहुतयो दशदिनपर्यन्तं प्रत्यहं सायम्प्रातराहुतिद्वयेन चत्वारिंशत्संख्याका भवन्ति ।

## (त) बालग्रहादिशमनम्

अथ यदि कुमारनामा बालग्रहो रोदनादिना कुमारमुपद्रुतं कुर्यात्तदा तदुपद्रवनिवृत्तये तं बालं मत्स्यजालेनोत्तरीयेण वा प्रच्छाद्याङ्के निधायेमं जपेत् -

**ॐ कूर्क्कुरः सुकूर्क्कुरः कूर्क्कुरो बालबन्धनः । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर १ ॥**

**तत्सत्यम् यत्ते देवा वरमददुः स त्वं कुमारमेव वा वृणीथाः । चेच्चेच्छुनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर २ ॥**

**तत्सत्यं यत्ते सरमा माता सीसरः पिता श्यामशवलौ भ्रातरौ । चेच्चेच्छूनक सृज नमस्तेऽअस्तु सीसरो लपेतापह्वर ३ ॥**

**न नामयति न रुदति न हृष्यति न ग्लायति । यत्र वयं वदामो यत्र चाभिमृशामसि ॥**

इति मन्त्रेणाभिमृश्य दक्षिणासङ्कल्पं कुर्यात् ।

## (थ) दक्षिणादानम्

अद्येहामुकोऽहं जातस्य शिशोः कृतैतज्जातकर्मणः साङ्गतायै साद्गुण्यार्थं च इमां दक्षिणां नानानामगोत्रेभ्यो ब्राह्मणेभ्यो विभज्य दास्ये । ततो भूयसीं सङ्कल्प्य ब्राह्मणेभ्यो दद्यात् । "**प्रथमेऽह्नि तथा षष्ठे दाता नाप्नोति सूतकम्**" इति वचनात्तत्र दानप्रतिग्रहौ न दोषायेति ।

### (द) नालच्छेदनम्

अष्टाङ्गुलं परित्यज्य नालच्छेदनं कुर्यात् । ततोऽभिषेकतिलकमन्त्रपाठादि च कारयेत् ॥

॥ इति जातकर्मविधिः ॥

## अभ्यासः

**१. शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

सचैलम् । उल्बम् । यथाविधि । हेम्ना । सकृत् । प्रत्यहम् । सायम्प्रातः ।

**२. प्रश्नान् समुत्तरयत**

१. शिशवे स्तनप्रदानमन्त्रौ कौ ?

२. शण्डामर्काभ्यां केन पदार्थेन कति संख्याकैर्हूयते ।

३. जातकर्मणि कानि कर्माणि विधीयन्ते ? संक्षेपेणोल्लिखत ।

# ६ षष्ठिकादेवी-पूजा

## (क) विघ्नेश-जन्मदा-षष्ठीदेवी-जीवन्तिकापूजा[१९]

जातस्य षष्ठे दिवसे रात्र्याः प्रथमे यामे (प्रदोषसमये) पिता कृतनित्यक्रियः हस्तौ पादौ प्रक्षाल्य पूजास्थानमागत्य दीपं प्रज्वलय्य आचम्य कर्मपात्रं कृत्वा कुशत्रयसहितं कर्मपात्रोदकमादाय, आत्मानं पूजाद्रव्याणि च सिञ्चेत् -

**ॐ अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं सबाहचाभ्यन्तरः शुचिः ॥**

**ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु ।**

**प्रतिज्ञासङ्कल्पः-** ॐ अद्येत्यादिदेशकालौ स्मृत्वा अस्य समातृकस्य शिशोरायुरारोग्यप्राप्तये सकलारिष्टशान्तिद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं च विघ्नेशस्य जन्मदायाः षष्ठीदेव्या जीवन्तिकायाश्च यथामिलितोपचारैः पूजनमहं करिष्ये ।

---

१९. **छैटीका दिनमा गरिने विशेष कृत्यहरू -**

"विघ्नेश जन्मदानां च जीवन्त्याश्च प्रपूजनम् । जातादि पञ्चमे षष्ठे निशायां बलिमाहरेदिति ।"

"सूतिकावासनिलया जन्मदा नाम देवताः । तासां यागनिमित्तं तु शुद्धिर्जन्मनि कीर्तितेति ।" जन्मनिमित्ताशौचेऽपीत्यर्थः ।

जननाशौचमध्ये प्रथमषष्ठदशमदिनेषु दाने प्रतिग्रहे च न दोषः, इत्याह -

"प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वाशौचं न कुर्वन्ति सूतके पुत्रजन्मनि ॥" इति व्यासः ।

अत्र शृतमन्नं तु निषिद्धम् । अत्र कर्तव्यमाह मिताक्षरायां मार्कण्डेयः -

"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः । पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः ।" इति

सूतिकागृहं शस्त्रमुसलाम्बुविभूतियुतं कार्यम् । सर्षपाँश्च सर्वतो विकिरेत् । अन्यदपि यथाऽऽचारं सर्वं कार्यम् । जन्मदाभ्योऽन्नादिना बलिर्देयः ।

एतत्प्रतिमाश्च चन्दनादिना कुडये लेखनीयाः । पीठादौ अक्षतपुञ्जरूपेण वा निवेश्याः । इति विशेषः ॥

सर्षपविकिरणम्- **ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**

**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**

**सर्वेषामविरोधेन पूजाकर्म समारभे ॥**

ततः सर्षपदूर्वाराजिकादिभिः पीतवस्त्रे पोटलिकां विधाय सूतिकोपरि रक्षार्थं लम्बयेत् । तां सर्वकर्मान्ते काण्डेन भिन्द्यादिति लोकाचारः । ततः सूतिकागृहाद्बहिः क्षेत्रपालादिभ्यो बलिं दद्यात् -

**ॐ क्षेत्रपाल नमस्तुभ्यं सर्वशान्तिफलप्रदः ।**

**बालस्य विघ्ननाशार्थमिमं गृहृण बलिं मम ॥**

**दैत्यभूतपिशाचाश्च रक्षन्तु सर्वतो गणाः ।**

**शुभं कुर्वन्तु मे सर्वं मम गृहृणन्त्विमं बलिम् ॥** इति

ततः सूतिकाद्वारमध्ये गणपतिं सम्पूज्य प्रार्थयेत् -

**ॐ सर्वविघ्नहरोऽसि त्वं एकदन्त गजानन ।**

**षष्ठीगृहेऽर्चितः प्रीत्या शिशुं दीर्घायुषं कुरु ॥**

**लम्बोदर महाकाय सर्वोपद्रवनाशन ।**

**त्वत्प्रसादादविघ्नेन चिरं जीवतु बालकः ॥** इति

ततो द्वारदक्षिणे- **ॐ क्षेत्रपालाय नमः** । द्वारवामे- **ॐ दुर्गायै नमः** । इति नाममन्त्रेण पूजयेत् । तदनन्तरं ॐ नमोऽस्त्वनन्तायेति दीपं सम्पूज्य, ॐ भूरसीत्यादिना कलशस्थापनविधिना कलशं संस्थाप्य तत्र- ॐ तत्त्वायामीति कलशं सम्पूज्य, ॐ गणानान्त्वेत्यादिना गणेशं च यथाविधि पूजयेत् । पुनः कलशे- ॐ नमः शम्भवायेति मृत्युञ्जयम्, ॐ श्रीश्चत इति उमाम्, ॐ विष्णोरराटमिति विष्णुं सम्पूज्य प्रार्थयेत् ।

**ॐ त्रैलोक्यपूजितः सौम्य ! सदा विजयवर्धन ! ।**

**शान्तिं कुरु गदापाणे ! नारायण नमोऽस्तु ते ॥**

ततः सूर्यादिनवग्रहान् तत्तन्मन्त्रेण सम्पूज्य तिथिवारनक्षत्रयोगकरणमासराशिमुहूर्तांश्च नाममन्त्रेण पूजयेत् । पीठादावक्षतपुञ्जेषु मार्कण्डेयं व्यासं अश्वत्थामानं परशुरामं कृपाचार्यं बलिं हनूमन्तं विभीषणञ्चावाह्य यथालब्धोपचारैः पूजयेत् । ततो विघ्नेशस्य जन्मदायाः षष्ठीदेव्या जीवन्तिकायाः शस्त्रगर्भाभगवत्याः प्रतिमाश्च लेपनादिना कुड्ये लेखनीयाः । अथवा गोमयप्रतिमायां पीठादावक्षतपुञ्जेषु वा स्वसम्प्रदायानुरोधेन प्रतिष्ठाप्य 'ॐ श्रीश्च ते०' इति मन्त्रेण पृथक् पृथङ् नाममन्त्रेण एकतन्त्रेण वा षोडशोपचारैः पूजयेत् । तत्रादौ प्राणप्रतिष्ठा -

**ॐ मनोजूतिर्ज्जुषतामाज्ज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टँ यज्ञꣳसमिमन्दधातु । विश्वेदेवासऽइह मादयन्तामोँ३ प्रतिष्ठ ॥** इति प्राणान् प्रतिष्ठाप्य,

ध्यानम् -

**ॐ देवीमञ्जनसङ्काशां चन्द्रार्धकृतशेखराम् ।**

**सिंहारूढां जगद्धात्रीं कौमारीं भक्तवत्सलाम् ॥**

**खड्गं खेटं च बिभ्राणामभयं वरदं तथा ।**

**तारकाहारभूषाढ्यां चिन्तयामि नवांशुकाम् ॥**

**ॐ विघ्नेशाय नमः । ॐ जन्मदायै नमः । ॐ महाषष्ठीदेव्यै नमः ।**

**ॐ जीवन्तिकायै नमः । ॐ शस्त्रगर्भायै नमः ।** इति क्रमेण ध्यायेत् ।

आवाहनम् –

**ॐ आयाहि वरदे देवि महाषष्ठीति विश्रुते ।**

**शक्तिभिः सह बालं मे रक्ष रक्ष वरानने ॥**

**आगच्छ वरदे देवि स्थाने चात्र स्थिरा भव ।**

**आराधयामि भक्त्या त्वां रक्ष बालं च सूतिकाम् ॥**

ॐ विघ्नेशमावाहयामि, ॐ जन्मदामावाहयामि, ॐ महाषष्ठीदेवीमावाहयामि ॐ जीवन्तिकामावाहयामि, ॐ शस्त्रगर्भाभगवतीमावाहायामीति क्रमेण आवाहयेत् ।

आसनम् –

**ॐ सन्ध्यारागनिभं रक्तमासनं स्वर्णनिर्मितम् ।**

**गृहाण सुमुखी भूत्वा रक्ष बालं च सूतिकाम् ॥**

आसनं समर्पयामि, विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्रगर्भाभगवतीभ्यो नमः ।

पाद्यम् –

**ॐ गङ्गाजलं समानीतं सुवर्णकलशे स्थितम् ।**

**पाद्यं गृहाण मे बालं सूतिकां चैव पालय ॥** पाद्यं सम० ।

अर्घ्यम् –

**ॐ गन्धपुष्पाक्षतैराढ्यमर्घ्यार्थं निर्मलं जलम् ।**

**गृहाण पाहि मे पुत्रं सूतिकाभयहारिणी ॥** अर्घ्यं सम० ।

आचमनीयम् –

**ॐ गृहाणाचमनीयं तु कर्पूरैलादिवासितम् ।**

**सबालां सूतिकां पाहि जगन्मातर्नमोऽस्तु ते ॥** आचमनीयं सम० ।

पञ्चामृतम् –

**ॐ पञ्चामृतं गृहाणेदं पयोदधिघृतं मधु ।**

**शर्करासहितं देवि पाहि बालं समातृकम् ॥** पञ्चामृतं सम० ।

शुद्धोदकस्नानम् –

**ॐ गङ्गाजलं मयाऽऽनीतं स्नानार्थं ते सुरेश्वरि ।**

**गृहाण श्रेष्ठं पानीयं रक्ष त्वं बालसूतिके ॥** शुद्धोदकस्नानं सम० ।

स्नानाङ्गमाचमनीयं च दत्त्वा ।

वस्त्रम् –

**ॐ दुकूलादिमयं देवि नानारत्नैः परिष्कृतम् ।**

**परिधत्स्वामलं वस्त्रं रक्ष मे सुतसूतिके ॥** वस्त्रोपवस्त्रं सम० ।

अलङ्काराः –

**ॐ नानारत्नमयं दिव्यं मुक्ताहारमयं शुभम् ।**

**गृहाण कालरात्रि ! त्वं रक्ष मे सुतसूतिके ॥** अलङ्कारान् सम० ।

चन्दनम् –

**ॐ कर्पूरागरुकस्तूरीकङ्कोलादिसमन्वितम् ।**

**चन्दनं स्वीकुरु त्वं मे रक्ष बालं च सूतिकाम् ॥** चन्दनं सम० ।

परिमलद्रव्यम् –

**ॐ हरिद्राकुङ्कुमादीनि नानापरिमलानि च ।**

**गृहाण सुभगे देवि रक्ष बालं च सूतिकाम् ॥** नानापरिमलद्रव्यं सम० ।

अक्षताः –

**ॐ अक्षतान् धवलान् देवि गृहाण परमेश्वरि ।**

**सर्वदेवोत्तमासि त्वमक्षयं देहि षष्ठिके ॥** अक्षतान् सम० ।

पुष्पाणि –

**ॐ सुमाल्यानि सुगन्धीनि मालत्यादीनि वै प्रभो ।**

**गृहाण वरदे देवि रक्ष बालं च सूतिकाम्** ॥ पुष्पाणि सम० ।

धूपः –

**ॐ वनस्पत्युद्भवं धूपं दिव्यं स्वीकुरु देवि मे ।**

**प्रसीद सुमुखी भूत्वा रक्ष मे सुतसूतिके** ॥ धूपं सम० ।

दीपः –

**ॐ आज्यं वर्तियुतं देवि ज्योतिषां ज्योतिरुत्तमम् ।**

**जीवन्तिके गृहाणेदं रक्ष मे सुतसूतिके** ॥ दीपं सम० ।

नैवेद्यम् –

**ॐ अन्नं च षड्रसोपेतं नानाभक्ष्यसमन्वितम् ।**

**भुङ्क्ष्व देवि गुणैर्युक्तं रक्ष मे सुतसूतिके** ॥ नैवेद्यं सम० ।

आचमनीयम् –

**ॐ उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः ।**

**शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम्** ॥ आचमनीयं सम० ।

फलम् –

**ॐ इदं फलं मया देवि स्थापितं पुरतस्तव ।**

**तेन मे परितुष्टा त्वं रक्ष बालं च सूतिकाम्** ॥ फलम् सम० ।

ताम्बूलम् –

**ॐ नागवल्लीदलं रम्यं पूगीफलसमन्वितम् ।**

**भद्रे गृहाण ताम्बूलं पाहि मे सुतसूतिके** ॥ ताम्बूलं सम० ।

दक्षिणा –

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे** ॥ द्रव्यदक्षिणां सम० ।

कर्पूरादिनीराजनम् –

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम्** ॥ नीराजनं सम० ।

पुष्पाञ्जलिम् –

**ॐ यथाकालोद्भवानां च चम्पकादिसुगन्धिनाम् ।**

**पुष्पाञ्जलिं गृहाणेमं रक्ष मे सुतसूतिके** ॥ पुष्पाञ्जलिं सम ० ।

प्रार्थना –

**ॐ लम्बोदर महाभाग सर्वोपद्रवनाशन ।**

**त्वत्प्रसादादविघ्नेश चिरं जीवतु बालकः ॥**

**जननी सर्वभूतानां बालानां च विशेषतः ।**

**नारायणीस्वरूपेण बालं मे रक्ष सर्वदा ॥**

**प्रेतभूतपिशाचेभ्यो डाकिनीयोगिनीषु च ।**

**मातेव रक्ष बालं मे श्वापदे पन्नगेषु च ॥**

**षष्ठीदेवि नमस्तुभ्यं सूतिकागृहवासिनि ।**

**पूजिता परया भक्त्या दीर्घमायुः प्रयच्छ मे ॥**

**जननी सर्वसौख्यानां वर्धिनी धनसम्पदाम् ।**

**साधिनी सर्वभूतानां जन्मदे त्वां नता वयम् ॥**

**गौरीपुत्रो यथा स्कन्दः शिशुत्वे रक्षितः पुरा ।**

**तथा ममाप्यमुं बालं षष्ठिके रक्ष ते नमः ॥**

**यथा दाशरथी रामश्चतुर्मूतिर्भवप्रदे ।**

**त्वया संरक्षितस्तद्वद् बालं पाहि शुभप्रदे ॥**

**विष्णुनाभिस्थितो बृह्मा दैत्येभ्यो रक्षितस्त्वया ।**

**तथा मे बालकं रक्ष योगनिद्रे नमोऽस्तु ते ॥**

**यथा वृत्रासुरादिन्द्रो रक्षितो दितिबालकः ।**

**त्वया तथा हि बालोऽयं रक्षणीयो महेश्वरि ॥**

**यथा त्वयाञ्जनीपुत्रो हनुमान् रक्षितः शिशुः ।**

**तथा मे बालकं रक्ष दुर्गे दुर्गतिहारिणि ॥**

**रुद्रः स्वर्गाद्यथा देवि कश्यपादिसुतास्त्वया ।**

**मातस्त्राहि तथा बालं विष्णुमाये नमोऽस्तु ते ॥**

**सर्वविघ्नानपाकृत्य सर्वसौख्यप्रदायिनि ।**

**जीवन्तिके जगन्मातः पाहि नः परमेश्वरि ॥**

अनया पूजया विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्रगर्भाभगवत्यः प्रीयन्ताम्, न मम ।

ततः षष्ठिकायै बालनिवेदनम् -

**ॐ देवतानामृषीणां च भक्तानां भक्तवत्सले ।**

**अर्पितं रक्ष मे बालं महाषष्ठि नमोऽस्तु ते ॥**

**जननी सर्वभूतानां बालकानां विशेषतः ।**

**सुतं मे स्वसुतं मत्वा रक्ष रक्ष वरानने ॥**

**एवं रक्ष महाषष्ठि सदा त्वं विघ्ननाशिनी ।**

**बालं मम सदा रक्ष नित्यं सत्कुक्षिसंस्थिता ॥**

**सर्वभूतहिते मातर्जगतस्तूपकारिणि ।**

**सर्वतः षष्ठीरूपेण बालरक्षां कुरुष्व मे ।**

**षष्ठीदेवि महाभागे सर्वविघ्नविनाशिनि ।**

**अयं मम कुलोत्पन्नो रक्षार्थं तव पादयोः ॥**

**नीतो मया महाभागे चिरञ्जीवतु मे सुतः ।**

स्कन्दपूजा –

आदौ ध्यानम्

**ॐ वराभयकरः साक्षाद् द्विभुजः शिखिवाहनः ।**

**किरीटी कुण्डली देवो दिव्याभरणभूषितः** ॥ इति ध्यात्वा,

**ॐ द्रप्सश्चस्कन्द पृथिवीमनु द्यामिमञ्च योनिमनुयश्च पूर्वः ।**

**समानं योनिमनुसञ्चरन्तं द्रप्सञ्जुहोम्यनु सप्तहोत्राः ॥**

इति मन्त्रेण पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत् -

**ॐ नमः कुमाराय महाप्रभाय स्कन्दाय ते स्कन्दितदानवाय ।**

**नवार्कबिम्बद्युतये नमोऽस्तु ते नमोऽस्त्वमोघोद्यतशक्तिपाणये ॥**

ततः सूतिकागृहे सोपस्करं बलिं दद्यात् -

**ॐ क्षेत्रस्याधिपते देवि सर्वारिष्टविनाशिनि ।**

**बलिं गृहाण मे रक्ष क्षेत्रं सूतिं च बालकम् ॥**

**इमं सोपस्करं बलिं क्षेत्राधिपत्यै देव्यै समर्पयामि, न मम ।**

ततोऽक्षतपुञ्जेषु गौर्यादिषोडशमातृः पूजयेत् -

**ॐ गौर्यै नमः । गौरीमावाहयामि, स्थापयामि, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।**

**ॐ पद्मायै नमः । पद्मावाहयामि, स्थापयामि, सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ।**

एवं प्रकारेण पूजयेत् । तासां नामानि यथा -

**ॐ गौरी पद्मा शची मेधा सावित्री विजया जया ।**<br>
**देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥**<br>
**धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः ।**<br>
**गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥**

ततः सूतिकागृहाद्बहिरागत्य द्वारस्योभयतो मातृकाद्वन्द्वं लिखेत्, तन्नामानि यथा -

**ॐ धिषणा वृद्धिमाता च तथा गौरी च पूतना ।**<br>
**आयुर्दात्र्यो भवन्त्वेता अद्य बालस्य मे शिवाः ॥**

एता नाममन्त्रेण पञ्चोपचारैः सम्पूज्य सुवासिन्यो भोजनीयाः ।

दक्षिणादानम् –

ॐ अद्येत्यादि देशकालौ सङ्कीर्त्य मम अस्य समातृकस्य शिशोरायुरारोग्यप्राप्तिपूर्वकं सकलारिष्टशान्तिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृताया विघ्नेशजन्मदाषष्ठीदेवीजीवन्तिकाशस्त्र-गर्भाभगवतीपूजायाः साद्गुण्यार्थमिमां दक्षिणां सुवर्णं वह्निदैवतं तत्प्रत्याम्नायद्रव्यं रजतखण्डं चन्द्रदैवतं नानानामगोत्रेभ्यो नानानामशर्मभ्यो ब्राह्मणेभ्यो यथाभागं विभज्य यथाकाले दातुमहमुत्सृजे ।

इति सङ्कल्प्य ब्राह्मणेभ्यो दक्षिणां दत्वा तेषामाशिषो गृह्णीयात् । ततो 'यान्तु देवगणा, गच्छ गच्छेति' च देवान् विसृज्य 'कायेन वाचा' इति कर्मेश्वरार्पणं कुर्यात् ।

॥ इति षष्ठिकादेवीपूजा ॥

## षष्ठिकापूजाको सामग्री

सामान्यपूजा सामग्री भाग - १ । दियो । कलश । गणेश । कर्मपात्र । रायो, सस्र्यूं । गोबर । दही । अक्षता । फूल । दुबो । पञ्चामृत । रातो, सेतो, पहेँलो वस्त्र । अर्घ्य । त्रिकुटी । पक्वान्न नैवेद्य । फलफूल । पानमसला । खड्ग । ठेकी । मदानी आदि ।

### शब्दार्थाः

| | | |
|---|---|---|
| कुड्यम् | = | भित्तो । |
| सूतिका | = | सुत्केरी । |
| जातः | = | जन्मेको । |
| विघ्नेशः | = | गणेश । |
| षष्ठीदेवी | = | बालक र सुत्केरीको रक्षा गर्ने देवी । |
| जन्मदा | = | बालक र सुत्केरीको रक्षा गर्दै जन्मदिने देवी । |
| जीवन्तिका | = | रक्षा गर्दै जीवित शिशु जन्माएर मातृशिशु दुवैको रक्षा गर्ने देवी । |
| समर्पणम् | = | सुम्पनु । |
| पोटलिका | = | पोको । |
| काण्डेन | = | बाणले । |

## अभ्यासः

१. **शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

सर्षपः । पोटलिका । सुवासिन्यः । शिशोः । आरोग्यम् । सोपस्करम् ।

## २. पाठ्यांशमनुसृत्य रिक्तस्थानं पूरयत

(क) क्षेत्रपाल नमस्तुभ्यं ......................... ।

..................................... बलिं मम ॥

(ख) देवीमञ्जन....................................... ।

सिंहारुढां ......................... वत्सलाम् ॥

(ग) नमः कुमाराय ...................... दानवाय ।

................................. शक्तिपाणये ॥

## ३. अधस्तनप्रश्नानामुत्तरं लेखनीयम्

(क) षष्ठीकर्म कदा कस्मिन्काले भवति ?

(ख) सूतिकापोटलिकायां स्थाप्यवस्तूनि कानि ? तत्र कर्तव्यकर्माणि च कानि ?

(ग) षष्ठिकाया ध्यानमन्त्रं लिखत ।

(घ) 'अन्नं च षड्रसोपेतं' अस्य मन्त्रस्य कुत्र विनियोगः ? इत्युल्लिख्य मन्त्रं च पूरयत ।

(ङ) गौर्यादिषोडशमातृनामानि ग्रन्थानुसारेण लेखनीयानि ।

**प्रयोगात्मकः**

षष्ठिकाया आवाहनादिदक्षिणापर्यन्तप्रयोगं यथाक्रमं प्रदर्शयत ।

# ७ नामकरणसंस्कारः

जातस्य एकादशदिवसे पिता कृतनित्यक्रियः हस्तौ पादौ प्रक्षाल्य पूजास्थानमागत्य आचम्य प्राणानायम्य कर्मपात्रं कृत्वा कुशत्रयसहितं कर्मपात्रोदकेनाभिषिच्य प्रतिज्ञासङ्कल्पं कुर्यात् -

ॐ अद्येत्यादि देशकालौ स्मृत्वा (अमुक)गोत्रस्य (अमुक)शर्मणः/वर्मणः/गुप्तस्य/दासस्य अहं मम नवजातस्य शिशोर्बीजगर्भसमुद्भवैनोनिबर्हणपूर्वकम् आयुरभिवृद्धिव्यवहारसिद्धिद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं नामकरणमहं करिष्ये । ततोऽग्निं यथाविधि स्थापयेत् -

## (क) अग्निस्थापनविधिना वनस्पत्यन्तहवनम्

पञ्चभूसंस्कारादिस्थण्डिलसंस्काराः, अग्निसंस्कारः, ब्रह्मोपवेशनम्, ब्रह्मवरणम्, पात्रासादनम्, ब्राह्मणवरणम्, पुण्याहवाचनम्, दीपकलशगणेशपूजनम्, होमसङ्कल्पः, आघाराज्यभाग-महाव्याहृतिहोमपूर्वकं पञ्चवारुणिहोमं, गणपत्यादिवनस्पत्यन्तहोमञ्च, अग्निस्थापनपद्धति-मनुसृत्य यथाविधि सम्पादयेत् ।

## (ख) शण्डामर्कहवनम्

जन्मदिनादारभ्य दशदिनपर्यन्तस्य दिनसंख्यया प्रतिदिनमाहुतिद्वयक्रमेण, अधोलिखिताभ्यां मन्त्राभ्यां चत्वारिंशद्वारं तण्डुलकणमिश्रसर्षपान् जुहुयात् -

ॐ शण्डामर्कौ, इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः शण्डामर्कौ देवता फलीकरणमिश्रसर्षपहोमे विनियोगः ।

**ॐ शण्डामर्का उपवीरः शौण्डिकेय उलूखलः । मलिम्लुचो द्रोणासश्च्यवनो नश्यतादितः स्वाहा** ॥

इदं शण्डामर्काय, उपवीराय शौण्डिकेयाय, उलूखलाय मलिम्लुचाय द्रोणेभ्यश्च्यवनाय न मम ।

ॐ आलिखिन्निति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्द आलिखतादेवता फलीकरणमिश्रसर्षपहोमे विनियोगः ।

**ॐ आलिखन्ननिमिषः किंवदन्त उपश्रुतिः । हर्यक्षः कुम्भी शत्रुः पात्रमाणिर्नृमणिर्हन्त्रीमुखः सर्षपारुणिच्च्यवनो नश्यतादितः स्वाहा ॥**

इदमालिखतेऽनिमिषाय किंवदद्भ्य उपश्रुतये हर्यक्षाय कुम्भीशत्रवे पात्रपाणये नृमणये हन्त्रीमुखाय सर्षपारुणाय च्यवनाय न मम । इति ।

## (ग) नामकरणम् (नामश्रावणम्)[20]

पिप्पलपत्रद्वये सुवर्णशलाकया चन्दनादिना जन्मनक्षत्रपादप्रयुक्ताक्षरादिकं नाम लिखित्वा **अस्य शिशोर्ब्रह्मायुष्यप्राप्त्यर्थं नामदेवतापूजनमहं करिष्ये,** इति सङ्कल्प्य **ॐ मनोजूतिरिति** प्रतिष्ठाप्य, **ॐ नामदेवताभ्यो नमः** इति षोडशोपचारैः सम्पूज्य स्वदक्षिणस्थ-मातुरुत्सङ्गस्थस्य शिशोर्दक्षिणे कर्णे नाम[21] श्रावयेत् - **'हे कुमार ! त्वम् (अमुक) शर्मा/वर्मा/गुप्तः/दासः असि'** । कुमारी चेत्- 'हे कुमारि !' इति ।

## (घ) उत्तराङ्गकर्म

ततश्चतुःस्वस्त्यादिपूर्णाहुतिहोमान्तमवशिष्टहोमं समाप्य पूर्णपात्रम्, मेधाहोमः, शेषचरुहोमः, गोदानम्, दक्षिणासङ्कल्पश्चेत्यादि सर्वमुत्तराङ्गकर्म अग्निस्थापनपद्धतिमाश्रित्य समापयेत् ।

---

२०. 'सूतकान्ते नामकर्म विधेयं स्वकुलोचितम्' इति मदनरत्ने नारदः । 'दशरात्रे व्युष्टे नामकरणम्' इति गोभिलगृह्यसूत्रम् । 'अहन्येकादशे नाम' इति याज्ञल्क्यः । 'दशम्यामुत्थाय ब्राह्मणान् भोजयित्वा पिता नाम करोति' इति पारस्करवचनाच्च प्रसवादेकादशेऽह्नि नामकरणम् ।

२१. **नामकरणे विशेषः** - द्व्यक्षरं चतुरक्षरं वा नाम कुर्यात् । घोषवदाद्यन्तरन्तःस्थं दीर्घाभिनिष्ठानं कृतं कुर्यान्न तद्धितम् । अयुजाक्षरमाकारान्तं स्त्रियै तद्धितम् । अर्थात् आदौ घोषवर्णयुतं मध्ये अन्तःस्थवर्णयुतं अवसाने गुरुवर्णयुतं कृत्प्रत्ययान्तं (भद्रकारि) इत्यादि चतुरक्षरं नाम । स्त्रिया विषमवर्णयुतं तद्धितप्रत्ययान्तमाकारान्तं नाम कुर्यादिति ।

**नामकरणे दाक्षिणात्यानामयं शिष्टाचारः**- कांस्यपात्रे तण्डुलान् प्रसार्य पिप्पलपत्रचतुष्टये सुवर्णशलाकया (१) देवतानाम = कुल देवताप्रयुक्तं नाम 'अमुकभक्तः' इत्यादि । (२) मासनाम= कृष्णः, माधवः, अनन्त इत्यादि । (३) नक्षत्रनाम = जन्मनक्षत्रपादप्रयुक्ताक्षरादि । (४) व्यवहारनाम चेत्थं नाम चतुष्टयं लिखित्वा । नामश्रावणमिति ।

### (ङ) सूर्यपूजनं तद्दर्शनञ्च[२२]

ततो गृहाद्बहिः प्राङ्गणादौ गोमयेन कुण्डं निर्माय तत्र अर्घ्यस्थापनपूर्वकं **ॐ आकृष्णेनरजसा** इति मन्त्रेण पाद्यादिभिरुपचारैः सूर्यं सम्पूज्य अर्घ्यं च दत्त्वा पिता कुमारं सूर्यं दर्शयति **ॐ तच्चक्षुर्देवहितम्** इति मन्त्रेण ।

॥ इति नामकरणसंस्कारः ॥

## नामकरण संस्कारका लागि आवश्यक सामग्री

सामान्य अग्निस्थापना होममा बताइएका सबै सामग्री । कनिका । भलायोको ठेलो । सस्यूँ । पञ्चगव्य । नाम लेख्न पिपलका पात । नाम राख्न चामल, वस्त्र, जनै, सुपारी ऋतुफल, पान इत्यादि ।

### शब्दार्थाः

| | | |
|---|---|---|
| आश्रित्य | = | आधार लिएर । |
| अनुसृत्य | = | अनुसरण गरेर (पछि लागेर) । |
| तण्डुलकणाः | = | कनिका । |
| शलाका | = | छेस्को (कलम) । |
| अयुजाक्षरम् | = | बिजोर अक्षर । |
| उत्सङ्गः | = | काख । |

२२. यद्यपि निष्क्रमणसंस्कार अरू संस्कारजस्तै पृथक् संस्कार हो । यो संस्कार 'चतुर्थे मासि निष्क्रमणिका' यस वचनअनुसार बालक जन्मेको चौथो महिनामा गर्नुपर्ने हो तर आजभोलि चौथो महिनामा नगरेर एघार दिनमा न्वारनकै दिनमा गर्ने गरिएको छ । कसैले यसलाई 'अन्नप्राशनकाले वा' भनेर अन्नप्राशन गर्दा निष्क्रमण संस्कार गर्नु भनेका छन् । संस्कार जुनसुकै पनि एक जनाको एकपल्ट गरेपछि दोहोऱ्याउन पर्दैन ।

| | | |
|---|---|---|
| दाक्षिणात्याः | = | दक्षिण देशवासी । |
| सर्षपः | = | सर्स्यूँ । |
| शण्डामर्कः | = | शण्ड र अमर्क नाम गरेका दैत्यका गुरु (शुक्राचार्यका पुत्र) । |

## अभ्यासः

**प्रश्नाः**

१. नामकरणविधिं संक्षेपेण प्रतिपादयत ।

२. शण्डामर्कहोममन्त्रौ कौ ? उभावपि लेखनीयौ ।

३. नामश्रावणे विधिविशेषं निरूपयत ।

४. स्त्रिया नामकरणे को विशेषः ? निर्दिशत ।

५. नवजातस्य शिशोः सूर्यदर्शनविधिं समन्त्रं लिखत ।

**प्रयोगात्मकः**

नामाद्यक्षरं कथं साध्यते ? शिक्षकसाहाय्येन गणनाविधेरभ्यासं कुरुत ।

# ८ अन्नप्राशनसंस्कारः[२३]

## (क) दीपकलशगणेशपूजा

सभार्यः पिता शिशुना सह मङ्गलस्नानं कृत्वा अहते वाससी परिधाय शुद्धासन उपविश्याचम्य कर्मपात्रं कृत्वा कुशतिलजलान्यादाय प्रतिज्ञासङ्कल्पं कुर्यात् -

ॐ अद्येत्यादि देशकालौ स्मृत्वा ममास्य शिशोर्मातृगर्भमलप्राशनशुद्ध्यर्थं विशेषतः ब्रह्मवर्चसइन्द्रियायुर्बललक्षणफलसिद्धिपूर्वकं बीजगर्भसमुद्भवैनोनिबर्हणद्वारा श्रीपरमेश्वरप्रीत्यर्थं दीपकलशगणेशपूजनपूर्वकम् अन्नप्राशनाख्यकर्माहं करिष्ये ।

ततो ब्राह्मणान् वृत्वा पुण्याहं वाचयेत् । ततः ॐ नमोऽस्त्वनन्तायेत्यादिना दीपं सम्पूज्य, ॐ गणानान्त्वेत्यादिना गणेशं सम्पूज्य, कलशस्थापनविधिना कलशं संस्थाप्य पूजयेत् ।

## (ख) अन्नप्राशनम्

भूमौ प्रस्थमितं धान्यं संस्थाप्य तदुपरि श्वेतवस्त्रं प्रसार्य तत्र भद्रासनं स्वस्तिकासनं वा विलिख्य बालकमुवेशयेत् । ततः सर्वान् रसान् सर्वमन्नं चैकस्मिन् पात्रे उद्धृत्य तूष्णीम् **“ॐ हन्त”** इति मन्त्रेण वा सकृदेव कुमारं प्राशयेत्, कुमार्या अमन्त्रकं कुर्यात् ।

ततो ब्राह्मणाय दक्षिणां दत्त्वा देवान् विसर्जयेत् । ततो ब्राह्मणभोजनम् । इत्यन्नप्राशनम् ।

## (ग) निष्क्रमणम्

कुमारस्य जन्मतश्चतुर्थे मासि गृहाद्बहिर्नयनं (निष्क्रमणं) कार्यम् । ‘अन्नप्राशनकाले वा’ इति वचनादन्नप्राशनान्तरं वा पिता शिशुं गृहाद्बहिर्निष्क्रामयेत् । तच्च नामकरणप्रकरणप्रोक्तविधिवत्

---

२३ पुत्रस्य षष्ठादौ समे पुत्र्याः पञ्चमादौ विषमे मासेऽन्नप्राशनं विधेयम् ।

'आकृष्णेनेति' मन्त्रेण पाद्यादिभिरुपचारैः सूर्यं सम्पूज्य 'तच्चक्षुरिति' मन्त्रेण पिता कुमारं सूर्यं दर्शयेत् । इति निष्क्रमणम् ।

### (घ) जीविकापरीक्षा[२४]

अन्नप्राशनादीनि सर्वाण्यपि कर्माणि समाप्य शिशुं देवताग्रे भूमौ समुपवेश्य तस्याग्रे पुस्तकम्, लेखनीम्, स्वर्णम्, रौप्यम्, वस्त्रम्, शस्त्रम्, शिल्पभाण्डानि मृदादिकञ्च स्थापयित्वा जीविकापरीक्षां कुर्यात् । तत्र शिशुः स्वेच्छया यद्वस्तु प्रथमं स्पृशेत् सा अस्य जीविकेति विद्यात् । इति जीविकापरीक्षा ।

### (ङ) देवदर्शनम्

अन्नप्राशनं जीविकापरीक्षां च समाप्य धात्र्या अथवा कुले या वृद्धाऽस्ति, तया स्वकीये पीठे शिशुं स्थापयित्वा यत्र कुत्रापि देवमन्दिरे देवदर्शनार्थं वाद्यघोषादिमङ्गलयात्रापूर्वकं नयेत् । तत्र नीत्वा देवं पाद्यादिभिरुपचारैर्यथाविधि सम्पूज्य कुमारं देवदर्शनं कारयेदिति देवदर्शनम् ।

॥ इति अन्नप्राशनसंस्कारः ॥

---

२४. मुहूर्तचिन्तामणौ- **तस्मिन् काले स्थापयेत्तत्पुरस्ताद्वस्त्रं शस्त्रं पुस्तकं लेखनीं च ।**
**स्वर्णं रौप्यं यच्च गृह्णाति बालस्तैराजीवैस्तस्य वृत्तिः प्रदिष्टा ॥**

## शब्दार्थाः

| | | |
|---|---|---|
| अहते वाससी | = | धोबीबाट नधुलाई स्वयम् पछ्यारेको धोती र उपर्ना । |
| प्रस्थमितम् | = | एक पाथी । |
| तूष्णीम् | = | चुप लागेर । |
| सकृत् | = | एकपल्ट । |
| अमन्त्रकम् | = | मन्त्र नपढीकन । |
| धात्र्या | = | धाईले । |
| शिल्पभाण्डानि | = | भाँडाकुँडा । |
| पीठे | = | पिठ्यूँमा । |
| स्थापयित्वा | = | बोकेर । |
| स्वेच्छया | = | आफ्ना इच्छाले |

## अभ्यासः

**प्रश्नाः**

१. बालकं कुत्र कथमुपवेश्यान्नं प्राशयन्ति ?

२. अन्नप्राशनविधिं संक्षेपेण स्पष्टीक्रियताम् ।

३. निष्कमणकालं निर्दिश्य विधिश्चोल्लेख्यः ।

४. जीविकापरीक्षाया इतिकर्तव्यता वर्णनीया ।

# ९ कर्णवेधः[२५]

वर्षे तृतीये पञ्चमे वेति अयुग्मवर्षे कर्णवेधः । तत्र चन्द्रतारानुकूले शुभदिने, कर्णवेधोक्तनक्षत्रे पिता प्रातरुत्थाय स्वकीयं प्रातःकृत्यं निर्वर्त्त्य आचम्य कर्मपात्रं कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् -

## (क) प्रतिज्ञासङ्कल्पः

ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य अमुकोऽहममुकराशेः पुत्रस्य बीजगर्भसमुदभवैनोनिबर्हणद्वारा पुष्टयायुःश्रीवृद्धिपूर्वकं श्रीपरमेश्वरप्रीतये कर्णवेधकर्म करिष्ये । तदङ्गत्वेन अर्घ्यस्थापनपूर्वकं दीपकलशगणेशादीनां पूजनञ्चाहं करिष्ये ।

ततोऽर्घ्यं संस्थाप्य दीपकलशगणेशान् सम्पूज्य कलशे नवग्रहानावाह्य सम्पूज्य जले केशवादिदेवानां पूजनं कुर्यात् -

## (ख) ससङ्कल्पं केशवादिदेवानां पूजनम्

**तत्र सङ्कल्पः**- अद्येहेत्यादि अमुकराशेः पुत्रस्य कर्णवेधकर्मणि कलशे आदित्यादिनवग्रहाणां जले केशवादिदेवानां च पूजनमहं करिष्ये । इति सङ्कल्प्य **एतन्ते०** इति प्राणप्रतिष्ठां कृत्वा

आवाहनम् -

**ॐ भूर्भुवः स्वः कलशे आदित्यादिनवग्रहाः जले केशवादिदेवाः सुप्रतिष्ठिताः सुवरदा भवन्तु,** इत्यावाह्य नाममन्त्रेण पाद्यादिभिः पूजयेत् -

---

२५. तत्र व्यासः- कृतचूडेऽव्रते बाले कर्णवेधो विधीयते । तद्देशाचारकुलाचारतोऽवगन्तव्यमिति ।

**ॐ केशवाय नमः । ॐ हराय नमः । ॐ ब्रह्मणे नमः । ॐ चन्द्राय नमः । ॐ सूर्याय नमः । ॐ दिगीशेभ्यो नमः । ॐ नासत्याभ्यां नमः । ॐ सरस्वत्यै नमः । ॐ गवे नमः । ॐ गुरुभ्यो नमः ।**

इति नाममन्त्रैर्ध्यानावाहनासनपाद्यार्घ्यस्नानाचमनवस्त्रगन्धाक्षतपुष्पधूपदीपनैवेद्यभूषणादिभिः सम्पूज्य जपं विधाय समर्प्य नीराज्य पुष्पाञ्जलिं समर्प्य स्वेष्टदेवं भिषग्वरं ब्राह्मणान् सौचिकं च नमस्कृत्य मातुरुत्सङ्गस्थं भूषणवस्त्रादिभिरलङ्कृतं बालकं प्राङ्मुखं कृत्वा लग्नदानसङ्कल्पं कुर्यात् ।

## (ग) लग्नशुद्धये दक्षिणादानम्

ॐ अद्येहेत्यादि अमुकराशेरस्य बालकस्य कर्णवेधलग्नाद् (अमुक)स्थानस्थितग्रहेण सूचितारिष्टनिवृत्यर्थं ग्रहाणां प्रीतये इमां दक्षिणां ब्राह्मणाय दास्ये । इति लग्नदानम् ।

ततो दैवज्ञबोधिते शुभे लग्ने पिता सौचिकोऽन्यो वा सुवर्णसूच्या रजतसूच्या वा अष्टाङ्गुलया बालकस्य दक्षिणं कर्णं वेधयेत् -

## (घ) कर्णवेधनम्

अथ दक्षिणकर्णाभिमन्त्रणम् - **ॐ भद्रं कर्णेभिरिति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः लिङ्गोक्ता देवता दक्षिणकर्णाभिमन्त्रणे विनियोगः ।**

**ॐ भद्रङ्कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेमहि देवहितँ यदायुः ॥**

वामकर्णाभिमन्त्रणम् - **ॐ वक्ष्यन्ती वेदा इति देवा ऋषयस्त्रिष्टुप्छन्दो लिङ्गोक्ता देवता वामकर्णाभिमन्त्रणे विनियोगः ।**

**ॐ वक्ष्यन्ती वेदा गनीगन्ति कर्णं प्रियꣳसखायं परिषस्वजाना । योषेव शिङ्क्ते वितताधिधन्वन् ज्याऽइयꣳसमने पारयन्ती ॥**

इत्यभिमन्त्र्य कर्णौ वेधयित्वा दक्षिणासङ्कल्पं कुर्यात् -

### (ङ) दक्षिणादानम्

ॐ अद्येहामुकोऽहं अमुकराशेरस्य बालकस्य कर्णवेधकर्मणः साङ्गफलप्राप्तये साद्गुण्यार्थं चेमां दक्षिणां नानानामगोत्रेभ्यः शर्मभ्यो ब्राह्मणेभ्यो विभज्य दास्ये, ॐ तत्सन्न मम ।

ततो ब्राह्मणान् भोजयित्वा दक्षिणां प्रदाय अभिषेकतिलकरक्षाबन्धनघृतच्छायामन्त्रपाठादि कारयित्वा जीवमातृपूजनं महानीराजनं च कुर्यात् ।

॥ इति कर्णवेधविधिः ॥

# १० जन्मोत्सवविधिः

अत्र जन्मतिथिरौदयिकी ग्राह्या ।
युगाद्यावर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ।
रवेरुदयमिच्छन्ति न तत्र तिथियुग्मता ॥ इति कृत्यतत्त्वार्णववचनात् ।

मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने तथा ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥ इति तिथितत्त्वे स्कान्दे ।

खण्डनं नखरोमाणां मैथुनाध्वगमौ तथा ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥ तत्रैव दीपिकायाम् ।

नवाम्बरधरो भूत्वा पूजयेच्च चिरायुषम् ।
मार्कण्डेयं नरो भक्त्या पूजयेत् प्रयतस्तथा ॥
तथा दीर्घायुषं व्यासं रामं द्रौणिं कृपं बलिम् ।
प्रह्लादं च हनूमन्तं विभीषणमथार्चयेत् ॥
स्वनक्षत्रं जन्मतिथिं राशिं वारं च पूजयेत् ।
षष्ठीं च दधिभक्तेन वर्षे वर्षे पुनः पुनः ॥ इति तिथितत्त्वे ।

सर्वैश्च जन्मदिवसे स्नात्वा मङ्गलवारिभिः ।
गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥
स्वनक्षत्रं च पितरं तथा देवं प्रजापतिम् ।
प्रतिसंवत्सरं यत्नात् कर्तव्यश्च महोत्सवः ॥ कृत्यचिन्तामणौ ।

अथ प्रयोगः –

तत्र कर्ता सर्वौषधिस्नानपूर्वकं स्नात्वा कृतनित्यक्रियः शुचिराचान्तः प्राङ्मुख उदङ्मुखो वा उपविश्य सङ्कल्पं कुर्यात् -

## (क) प्रतिज्ञासङ्कल्पः

ॐ अद्येत्यादि देशकालादीन् सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणो/वर्मणो/गुप्तस्य मम जन्मदिवसे वर्षवृद्धौ जन्मोत्सवकर्मणि दीर्घायुरारोग्यैश्वर्योदयाद्यभिवृद्ध्यर्थं दीपकलशगणेशपूजनपूर्वकं मार्कण्डेयाद्यष्टचिरञ्जीविनां महाषष्ठिकायाश्च यथासम्पादितोपचारैः पूजनमहं करिष्ये ।

ततो ब्राह्मणवरणं पुण्याहवाचनं च विधाय दीपकलशगणेशान् यथाविधि सम्पूजयेत् । तत्र मङ्गलाभिधानकलशे गुरुं, नारायणदेवं, अग्निं, प्रजापतिम्, पितॄन् स्वस्वनाममन्त्रैश्चतुर्थ्यन्तपदैः पूजयेत् । ततः कलशसमीपे पीठिकोपरि तण्डुलोपरि वा वस्त्रमास्तीर्य तत्र स्थाल्याम् अष्टदलपद्मं लिखित्वा, अष्टदले पुगीफलं तण्डुलपुञ्जं वा विन्यस्य पूर्वादिक्रमेण पूजयेत् -

## (ख) अष्टचिरञ्जीविनां पूजनम्

पूर्वे- **ॐ मार्कण्डेयाय नमः, मार्कण्डेयम् आवाहयामि, स्थापयामि, पूजयामि । भो मार्कण्डेय ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य, आसनम् पाद्यम्, अर्घ्यम्, आचमनीयम् स्नानीयम्, पञ्चामृतम्, पुनराचमनीयम्, चन्दनम्, अक्षतान्, पुष्पाणि समर्पयामि, मार्कण्डेयाय नमः ।

प्रार्थना- **ॐ शरदिन्दुनिभं शान्तं द्विभुजं तं वरप्रदम् ।**
**छत्राभयकरं ध्याये मार्कण्डेयं महामुनिम् ॥**
**वटवृक्षसमारूढं सच्छत्रं ब्रह्मचिन्तकम् ॥**
**ऋषिवृन्दशतैस्तुत्यं मार्कण्डेयं नमाम्यहम् ॥**

आग्नेय्याम्- **ॐ व्यासाय नमः, व्यासम् आवाहयामि, स्थापयामि, पूजयामि । भो व्यास ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ सर्वशास्त्रार्थतत्वज्ञं वेदवेदाङ्गपारगम् ।**

**शास्त्रमूलप्रवक्तारं पराशरसुतं भजे ॥**

दक्षिणे- **ॐ परशुरामाय नमः, परशुरामम् आवाहयामि, स्थापयामि, पूजयामि । भो परशुराम ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ कार्तवीर्यस्य हन्तारं परशुहस्तं महाबलम् ।**

**एकविंशतिनिःक्षत्रं कुर्वन्तं त्वां नमाम्यहम् ॥**

नैर्ऋत्याम्- **ॐ अश्वत्थाम्ने नमः, अश्वत्थामानम् आवाहयामि, स्थापयामि, पूजयामि । भो अश्वत्थामन् ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ श्यामवर्णं महातेजः खड्गपाणिं वरप्रदम् ।**

**अश्वत्थामानमाचार्यं ध्याये द्रोणसुतं शिवम् ॥**

**ब्राह्मणाय नमस्तुभ्यं द्रोणाचार्यसुताय वै ।**

**वेदवेदाङ्गपूर्णाय अश्वत्थाम्ने नमो नमः ॥**

पश्चिमे- **ॐ कृपाचार्याय नमः, कृपाचार्यम् आवाहयामि, स्थापयामि, पूजयामि । भो कृपाचार्य ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ धनुर्बाणधरं वीरं श्वेतपीतद्युतिं परम् ।**
**भारद्वाजकुलोत्पन्नं कृपं ध्याये मलापहम् ॥**
**राजर्षभ नमस्तुभ्यं भारद्वाजकुलोद्भव ।**
**कृपाचार्य सदा तुष्ट धीरवीरपराक्रम ॥**

वायव्याम्- **ॐ बलये नमः, बलिम् आवाहयामि, स्थापयामि, पूजयामि । भो बले ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ दैत्येन्द्रकुलसम्भूत दानयज्ञक्रियारत ।**
**प्रपन्नः शरणं त्वाहं दीर्घमायुः प्रयच्छ मे ॥**
**भूमिं स्वर्गं च पातालं येन दत्तं द्विजन्मने ।**
**भविता योऽमरावत्यां महेन्द्रस्तं नमाम्यहम् ॥**

उत्तरे- **ॐ हनुमते नमः, हनुमन्तम् आवाहयामि, स्थापयामि, पूजयामि । भो हनुमन् ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ वायुपुत्रं महावीरं रक्तवर्णं त्रिलोचनम् ।**
**कन्दमूलफलप्रीतं हनूमन्तं नमाम्यहम् ॥**
**अञ्जनीगर्भसम्भूतं हनूमन्तं नमाम्यहम् ॥**
**कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥**

ऐशान्याम्- **ॐ विभीषणाय नमः, विभीषणम् आवाहयामि, स्थापयामि, पूजयामि । भो विभीषण ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ लङ्कावास नमस्तुभ्यं पौलस्त्यकुलसम्भव ।**

**राक्षसाधिपते देव नमस्तेऽस्तु विभीषण ॥**

मध्ये- **ॐ षष्ठिकायै नमः, षष्ठिकाम् आवाहयामि, स्थापयामि, पूजयामि । भो षष्ठिके ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ जगन्मातर्जगद्धात्रि जगदानन्दकारिणि ।**

**प्रसीद मम कल्याणि नमोऽस्तु षष्ठिदेवते ॥**

**रूपं देहि यशो देहि भद्रं कल्याणि देहि मे ।**

**पुत्रान् देहि धनं देहि सर्वान् कामाँश्च देहि मे ॥**

तत्समीपे- **ॐ कार्तिकेयाय नमः, कार्तिकेयम् आवाहयामि, स्थापयामि, पूजयामि । भो कार्तिकेय ! इहागच्छ, इह तिष्ठ, यावत्पूजां करोमि, तावत्त्वं सुस्थिरो भव, सुप्रसन्नो भव, सुवरदो भव ।**

इत्यावाह्य पूर्ववद् आसनपाद्यार्घ्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत्-

**ॐ कार्तिकेय महाबाहो गौरीहृदयनन्दन ।**

**स्कन्द मां रक्ष सर्वत्र एहि देव नमोऽस्तु ते ॥**

ततो जन्मसंवत्सरम्, जन्ममासम्, जन्मनक्षत्रम्, जन्मतिथिम्, जन्मराशिम्, जन्मवासरम्, जन्मयोगकरणादींश्च स्वस्वनामभिः चतुर्थ्यन्तपदैरर्चयेत् । तदनन्तरं वस्त्रम्, यज्ञोपवीतम्, धूपम्, दीपम्, नैवेद्यम्, नारिकेलादिफलम्, ताम्बूलम्, कृतायाः पूजायाः साद्गुण्यार्थे द्रव्यं दक्षिणाञ्च समर्पयेत् ।

## (ग) षष्ठिकायै दधिभक्तदानम्

ततः षष्ठिकायै दधिभक्तबलिं दद्यात्, तद्यथा- **ममायुरारोग्यवृद्धये षष्ठिकायै मात्रे एष दधिभक्तबलिस्तुभ्यं नमः।**

## (घ) पोटलिकानिर्माणम्

पीतवस्त्रे गुग्गुलं, निम्बं, सिद्धार्थं, दूर्वा, गोरोचनादिकञ्च संस्थाप्य तत्र गणेशं भास्करञ्च पूजयेत्। ततो मार्कण्डेयाय गुडतिलमिश्रं दुग्धं समर्प्य हस्ते गन्धपुष्पादिकं गृहीत्वा मार्कण्डेयं प्रार्थयेत् -

## (ङ) मार्कण्डेयप्रार्थना

**ॐ मार्कण्डेयाय मुनये नमस्ते महदायुषे।**
**चिरजीवी यथा त्वं भो भविष्यामि तथा मुने॥**
**रूपवान् वित्तवांश्चैव श्रिया युक्तश्च सर्वदा।**
**मार्कण्डेय महाभाग सप्तकल्पान्तजीवन॥**
**आयुरारोग्यसिद्ध्यर्थं प्रसीद भगवन्मुने।**
**नराणामायुरारोग्यैश्वर्यसौख्यसुखप्रद॥**
**सौम्यमूर्ते नमस्तुभ्यं भृगुवंशधराय च।**
**महातपो मुनिश्रेष्ठ सप्तकल्पान्तजीवन॥**
**मार्कण्डेय नमस्तुभ्यं दीर्घायुष्यं प्रयच्छ मे।**
**मार्कण्डेय महाभाग प्रार्थये त्वां कृताञ्जलिः॥**
**चिरजीवी यथा त्वं तु मुनीनां प्रवर द्विज।**
**कुरुष्व मुनिशार्दूल तथा मां चिरजीविनम्॥**

ततो होमकरणपक्षे - अग्निस्थापनविधिना होमं कुर्यात्।

## (च) मन्त्रपाठपूर्वकं पोटलिकाबन्धनम्

**ॐ मार्कण्डेय महाभाग आयुरारोग्यदायक ।**

**शुभदौ विघ्नहर्तारौ भानुविघ्नेश एव तु ॥**

**धारयामि भुजे दक्षे मम कल्याणहेतवे ।**

**पूरयध्वं सदास्माकं कामनाँश्च मनोरथान् ॥**

इति मन्त्रं पठित्वा पोटलिकां दक्षहस्ते धारयेत् ।

## (छ) पयःपानम्

तिलगुडयुतं पयोऽञ्जलिनाऽऽदाय तदर्धं पिबेत् -

**ॐ सतिलं गुडसंमिश्रमञ्जल्यर्धमिदं पयः ।**

**मार्कण्डेयाद्वरं लब्ध्वा पिबाम्यायुर्विवृद्धये** ॥ इति पीत्वा शेषं पश्चभागे त्यजेत् ।

## (ज) पूर्णपात्रादिदानम् विसर्जनञ्च

ततः पूर्णपात्रं, ब्राह्मणेभ्यो दक्षिणां च दत्त्वा 'यान्तु देवगणा' इति देवान् विसृज्य 'कायेन वाचा' इति कर्मेश्वरार्पणं कृत्वा कर्म समापयेत् ।

॥ इति जन्मोत्सवविधिः ॥

### जन्मोत्सवका लागि आवश्यक सामग्री

सामान्य पूजाको सामग्री - भाग १, कर्मपात्र, अर्घौतो, पञ्चामृत, दियो, कलश, गणेश, थाली, पञ्चपात्र, जनै, सुपारी, वस्त्र, धूप, बत्ती, नैवेद्य, फलफूल, पान, कपूर, दही, अक्षता, दुध, तिल, कुश, दुबो, सस्यूँ, निम, गोरोचन, गुग्गुल आदि ।

# अभ्यासः

**१. शब्दार्थमुल्लिख्य वाक्येषु प्रयोजयत**

उपरि । विन्यस्य । निम्बम् । तिलमिश्रम् । पयः । अञ्जलिना ।

**२. परस्परं मेलयत**

| | |
|---|---|
| पूर्वे | बलिः |
| दक्षिणे | कृपः |
| पश्चिमे | व्यासः |
| उत्तरे | हनुमान् |
| आग्नेय्याम् | मार्कण्डेयः |
| नैर्ऋत्याम् | अश्वत्थामा |
| वायव्याम् | कार्तिकेयः |
| ऐशान्याम् | विभीषणः |
| | परशुरामः |

**३. पाठ्यांशमनुसृत्य रिक्तस्थानं पूरयत**

(क) शरदिन्दुनिभं ......................... वरप्रदम् ।
छत्राभयकरं ..................................... ॥

(ख) ................................ वेदाङ्गपारगम् ।
....................................... भजे ॥

(ग) जगन्मातर्जगद्धात्रि ...................... ।
.................................. षष्ठिदेवते ॥

(घ) मार्कण्डेयाय................................ ।

....................... भविष्यामि ........... ॥

(ङ) सतिलं ............................ पयः ।

मार्कण्डेयाद् .............................. ॥

४. **अधस्तनप्रश्नानामुत्तरं देयम्**

(क) के चिरञ्जीविनः ?

(ख) षष्ठिकायै दधिभक्तबलिदानवाक्यं लिखत ।

(ग) पोटलिकानिर्माणप्रकारमुल्लिख्य तद्धारणमन्त्रञ्च लिखत ।

(घ) समन्त्रं पयःपानविधिरुल्लेख्यः ।

**प्रयोगात्मकः**

कस्यचिन्मित्रस्य जन्मदिवसावसरे कक्षायां जन्मोत्सवमायोज्य शिक्षकमग्रे कृत्वा पूजाविधेरभ्यासो विधेयः ।

# ११ श्रीस्वस्थानीव्रतपूजाविधिः

कृतनित्यक्रिया व्रतकर्त्री हस्तौ पादौ प्रक्षाल्य गोमयोपलिप्ते शुचौ देशे पीठाद्यासनमुपकल्प्य तत्र पूर्वाभिमुखी उपविश्याऽऽचम्य दीपं प्रज्वाल्य बद्धाञ्जलिः पठेत् -

**ॐ श्रीमन्महागणाधिपतये नमः । ॐ लक्ष्मीनारायणाभ्यां नमः । ॐ उमामहेश्वराभ्यां नमः । ॐ वाणीहिरण्यगर्भाभ्यां नमः । ॐ शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । ॐ इष्टदेवताभ्यो नमः । ॐ कुलदेवताभ्यो नमः । ॐ ग्रामदेवताभ्यो नमः । ॐ स्थानदेवताभ्यो नमः । ॐ वास्तुदेवताभ्यो नमः । ॐ सर्वेभ्यो देवेभ्यो नमः । ॐ सर्वेभ्यो ब्राह्मणेभ्यो नमः ।**

**ॐ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।**

**लम्बोदरश्च विकटो विघ्ननाशो विनायकः ॥**

**धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।**

**द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥**

**विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।**

**सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥**

**शुल्काम्बरधरं देवं शशिवर्णं चतुर्भुजम् ।**

**प्रसन्नवदनं ध्याये सर्वविघ्नोपशान्तये ॥**

**अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः ।**

**सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥**

सर्षपविकिरणम्

**ॐ अपसर्पन्तु ते भूता ये भूता भूमिमाश्रिताः ।**

**ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥**

**अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ।**

**सर्वेषामविरोधेन पूजाकर्म समारभे ॥**

इति मन्त्रेण सर्षपान् विकीर्य कर्मपात्रं कृत्वा '**ॐ अपवित्रः पवित्रो वा**' इति कर्मपात्रस्थ-जलेनाऽऽत्मानं पूजासामग्रीं च सम्प्रोक्ष्य प्रायश्चित्तगोदानं कुर्यात् ।

ततो हस्ते कुशादिकमादाय पूजासामग्रीं हस्ते कृत्वा प्रतिज्ञासङ्कल्पं कुर्यात् ।

हरिः ॐ तत्सदित्यादि ...... गोत्रा ...... नाम्नी देव्यहं मम कायिक-वाचिक-मानसिक-सांसर्गिक-ज्ञाताज्ञात-सकलपापक्षयपूर्वकं श्रुतिस्मृतिपुराणागमोक्तफलावाप्तये आध्यात्मिकाधिदैविकाधिभौतिकत्रिविधतापोपशमनार्थं दुःखदारिद्र्य-दुःस्वप्नदुर्ग्रह-दुरितोपशमनपूर्वकम्, आधिव्याधि-भयशोकादि-विघ्नोपसर्गादि-जनितपीडानिवृत्त्यर्थं श्रीस्वस्थानीदेव्या अनुकम्पया पुत्रपौत्र-धनधान्यायुरारोग्यादि-नानाविधसुखसौभाग्यसमृद्ध्यर्थं श्रीसदाशिवसायुज्यमुक्तिपदप्राप्त्यर्थं दीपकलशगणेशपूजनपूर्वकं सदाशिवसहितायाः श्रीस्वस्थानीदेव्या यथालब्धोपचारैः पूजनमहं करिष्ये । इति

## (क) अर्घ्यस्थापनम्

स्वस्य दक्षिणे पिष्टातकेन त्रिकोणं षट्कोणं वा विलिख्य तत्र त्रिपादिकां निधाय तस्योपरि अर्घ्यपात्रं स्थापयित्वाऽर्घ्यं [२६] सम्पाद्य गन्धादिभिः पूजयेत् -

**ॐ गङ्गे च यमुने चैव गोदावरि सरस्वति ।**

**नर्मदे सिन्धो काबेरि जलेऽस्मिन् सन्निधिं कुरु ॥**

**ॐ द्वादशकलात्मने सूर्यमण्डलाय नमः, ॐ षोडशकलात्मने सोममण्डलाय नमः, ॐ दशकलात्मने वह्निमण्डलाय नमः ।**

ततोऽङ्कुशमुद्रया सूर्यमण्डलाद् गङ्गादिनदीरावाह्य धेनुमुद्रयाऽमृतीकृत्य मत्स्यमुद्रयाऽऽच्छाद्य प्रणवेन दशधाऽभिमन्त्रयेत् । तत्रस्थजलेन पूजासामग्रीं आत्मानं च प्रोक्षेत् । ततः सूर्यायार्घ्यं दद्यात् -

---

२६ आपः क्षीरं कुशाग्राणि दध्याज्यतिलतण्डुलान् । दूर्वा सिद्धार्थकं ग्राह्यमष्टाङ्गो ह्यर्घ्य उच्यते ॥

**ॐ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ।**

**अनुकम्पय मां भक्त्या गृहाणार्घ्यं दिवाकर ॥**

इदमर्घ्यं समर्पयामि, जगत्साक्षिणे श्रीसूर्यनारायणाय नमः ।

इत्यर्घ्यं दत्वा पुनरर्घ्यं संस्थाप्य यथाविधि पूजयेत् ।

## (ख) दीपपूजा

ॐ पृष्टो दिवि पृष्टोऽअग्निरित्यावाह्य,

**ॐ नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ।**

**सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥**

इति पाद्यादिभिरुपचारैः सम्पूज्य प्रार्थयेत् -

**ॐ नमः कमलनाभाय नमस्ते जलशायिने ।**

**नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥**

**वासनाद् वासुदेवस्य वासितं भुवनत्रयम् ।**

**सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते ॥**

## (ग) कलशपूजा

ॐ भूरसीति' भूमिशोधनम् । 'धान्यमसीति' धान्यस्थापनम् । 'आजिघ्रकलशमिति' कलशस्थापनम् । कलशे 'वरुणस्योत्तम्भनमिति' जलम्, 'याऽओषधीरिति सर्वौषधीः, 'हिरण्यगर्भः' इति पञ्चरत्नानि, 'याः फलिनीरिति' फलानि, 'ओषधयः' इति यवान्, 'गन्धद्वारामिति' चन्दनम्, 'काण्डात्काण्डादिति' दूर्वा, 'स्योनापृथिवीति' सप्तमृदः, 'अश्वत्थे वः' इति पञ्चपल्लवान्, 'बृहस्पतेऽअतीति' वस्त्रम्, 'अम्बेऽअम्बिक' इति आम्रपल्लवान् प्रक्षिप्य 'ॐ तत्त्वायामीति' वरुणमावाह्य पाद्यादिभिरुपचारैः सम्पूज्य 'सर्वे समुद्राः' इति गङ्गाजलं प्रक्षिप्य 'कलशस्य मुखे विष्णुः' इत्यादिभिः कलशमभिमन्त्र्य, 'देवदानवसंवादे' इति प्रार्थयेत् । ततो गणपत्यादिवनस्पत्यन्तदेवताश्चावाह्य गन्धादिभिरुपचारैः पूजयेत् ।

## (घ) गणेशपूजा

तत्रादौ पीठपूजा -

| | | |
|---|---|---|
| **ॐ तीव्रायै नमः ।** | **ॐ ज्वालिन्यै नमः ।** | **ॐ नन्दायै नमः ।** |
| **ॐ भोगदायै नमः ।** | **ॐ कामरूपिण्यै नमः ।** | **ॐ सत्यायै नमः ।** |
| **ॐ उग्रायै नमः ।** | **ॐ तेजोवत्यै नमः ।** | **ॐ विघ्नविनाशिन्यै नमः ।** |

**ॐ सर्वशक्तिकमलासनायै नमः ।** इति ।

ततो ॐ गणानान्त्वेति गणपतिमावाह्य ॐ सहस्रशीर्षेत्यादिषोडशमन्त्रैः पाद्यादिभिरुपचारैः समभ्यर्च्य नाममन्त्रैश्च पूजयेत् -

| | | |
|---|---|---|
| **ॐ गणपतये नमः ।** | **ॐ विघ्नराजाय नमः ।** | **ॐ हेरम्बाय नमः ।** |
| **ॐ सिद्धिविनायकाय नमः ।** | **ॐ एकदन्ताय नमः ।** | **ॐ मूषकवाहनाय नमः ।** |
| **ॐ गजवक्त्राय नमः ।** | **ॐ परशुहस्ताय नमः ।** | **ॐ पार्वतीनन्दनाय नमः ।** |

तदनन्तरं धूपं दीपं नैवेद्यम् ऋतुफलं द्रव्यदक्षिणां च समर्प्य हस्ते फलादिकं रक्तपुष्पं चादाय 'रक्ष-रक्ष, वक्रतुण्ड' इत्यादिभिः प्रार्थयेत् ।

## (ङ) प्रधानदेवतापूजनम्

तत्रादौ न्यासः -

**ॐ देवीवरकामिन्यै नमः, हृदयाय नमः । ॐ मित्रबन्धनमदनायै नमः, शिरसे स्वाहा । ॐ त्रैलोक्यचिन्तामण्यै नमः, शिखायै वषट् । ॐ दिगम्बरधरणीधारिण्यै नमः, कवचाय हुम् । ॐ चण्डमुण्डप्रमथिन्यै नमः, नेत्रत्रयाय वौषट् । ॐ स्वस्थान्यै नमः, अस्त्राय फट् ।**

प्राणप्रतिष्ठा –

**ॐ एतन्ते देव सवितर्यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे । तेन यज्ञमव तेन यज्ञपतिन्तेन मामव ॥**

**ॐ मनोजूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमन्तनोत्वरिष्टँ यज्ञꣳसमिमन्दधातु । विश्वे देवासऽइह मादयन्तामोँ३ प्रतिष्ठ ॥**

**ॐ सदाशिवसहितायाः श्रीस्वस्थानीदेव्याः जीवप्राणेन्द्रियाणि इहागत्य यथासुखं चिरं तिष्ठन्तु स्वाहा** । इति प्राणान् प्रतिष्ठाप्य ।

ध्यानम् –

**ॐ सुवर्णवर्णदीप्ताभां त्रिनेत्रां कमलासनाम् ।**

**सिंहासनसमासीनां सर्वालङ्कारभूषिताम् ॥**

**नीलोत्पलाभयां वामे दक्षिणे वरदाभयाम् ।**

**खड्गचर्मधरां चोर्ध्वं वामदक्षिणयोः क्रमात् ॥**

**चतुर्भुजां च मां तत्र पूजयेद् वृषकेतनम् ।**

**एवं ध्यायेन्महादेवीं स्वस्थानीं जगदीश्वरीम् ॥**

ध्यानं समर्पयामि, सदाशिवसहितायै श्रीस्वस्थानीदेव्यै नमः ।

आवाहनम् –

**ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिꣳसर्वतस्पृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥**

ॐ भूर्भुवःस्वः सदाशिवसहिते श्रीस्वस्थानीदेवि इहागच्छ, इह तिष्ठ, मम पूजां गृहाण, यावत्पूजां करोमि, तावत्वं सुस्थिरा भव, सुप्रसन्ना भव, सुवरदा भव । इत्यावाह्य

आसनम् –

**ॐ पुरुषऽएव० ।**

**ॐ नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ।**

**आसनं च मया दत्तं गृहाण परमेश्वरि ॥**

आसनं समर्पयामि, सदाशिवसहितायै श्रीस्वस्थानीदेव्यै नमः ।

पाद्यम् –

**ॐ एतावानस्य०** ।

**ॐ गङ्गादिसर्वतीर्थभ्यो मया प्रार्थनयाऽऽहृतम्** ।

**तोयमेतत्सुखस्पर्शं पाद्यं मे प्रतिगृह्यताम्** ॥

पादयोः पाद्यं समर्पयामि, सदाशिवसहितायै श्रीस्वस्थानीदेव्यै नमः ।

अर्घ्यम् –

**ॐ त्रिपादूर्ध्व०** ।

**ॐ व्रतमुद्दिश्य देवेशि गन्धपुष्पाक्षतैर्यंतम्** ।

**गृहाणार्घ्यं मया दत्तं सर्वसिद्धिप्रदा भव** ॥ हस्तयोरर्घ्यं समर्पयामि०...

स्नानम् –

**ॐ ततो विराट्०** ।

**ॐ हिममिक्षुसरोजातं निर्मलञ्च हिमोपमम्** ।

**स्नानं समर्पितं पूर्वं लक्ष्मि तुभ्यं नमो नमः** ॥ स्नानीयं समर्पयामि०...

पञ्चामृतम् –

**ॐ पञ्चनद्यः सरस्वतीमपियन्ति सस्रोतसः** । **सरस्वती तु पञ्चधा सोऽदेशेऽभवत्सरित्** ॥

**ॐ पयोदधिघृतं देवि शर्करामधुसंयुतम्** ।

**पञ्चामृतं मया दत्तं स्नानार्थं प्रतिगृह्यताम्** ॥ पञ्चामृतं सम०...

शुद्धोदकस्नानम् –

**ॐ आपोऽअस्मान्०** । शुद्धोदकस्नानं सम०...

वस्त्रम् –

**ॐ तस्माद्यज्ञात्सर्वहुतः० ।**

**ॐ दुकूलपट्टदेवाङ्गं नानावस्त्रसुशोभितम् ।**

**समर्पये महेशानि भुक्तिं मुक्तिं च देहि मे ॥** वस्त्रं सम०...

यज्ञोपवीतम् –

**ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः० ।**

**ॐ अष्टचत्वारिंशदाख्यं द्विजसंस्कारमुत्तमम् ।**

**नागसूत्रयुतं पूर्णं ब्रह्मसूत्रं प्रगृह्यताम् ॥** यज्ञोपवीतं सम०...

आभूषणानि –

**ॐ दिव्यरत्नसमायुक्ताः वह्निभानुसमप्रभाः ।**

**गात्राणि शोभयिष्यन्ति ह्यलङ्काराः सुरेश्वरि ॥**

**सीमन्तशोभनं दिव्यं भर्तुरायुर्विवर्धनम् ।**

**गृहाण देवि सौभाग्यप्रवर्धनपरा भव ॥** आभूषणानि सम०...

भूमौ धान्यं निधाय तस्योपरि कलशं स्थापयित्वा यथाविधि सम्पूज्य कलशोपरि स्थालीं स्थापयेत् । ततः स्थाल्यां पूर्वादिदिग्विदिक्षु भो इन्द्रः इहागच्छेह तिष्ठेत्यावाहनादिक्रमेण इन्द्रादिदशदिक्पालान् पूजयेत् ।

## (च) आवरणपूजा

| | | |
|---|---|---|
| **ॐ नन्दिन्यै नमः ।** | **ॐ गुरुभ्यो नमः ।** | **ॐ क्षेत्रपालाय नमः ।** |
| **ॐ नन्दिने नमः ।** | **ॐ महाकालाय नमः ।** | **ॐ भृङ्गिणे नमः ।** |

ॐ वृषाय नमः । ॐ चण्डिकायै नमः । ॐ सदाशिवाय नमः ।

ॐ श्रीस्वस्थानीदेव्यै नमः । ॐ विष्णवे नमः । ॐ उग्राय नमः ।

ॐ अपर्णसहिताय नमः । ॐ कपर्दिने नमः । ॐ भवानीसहिताय नमः ।

ॐ शङ्करायेन्द्रसहिताय नमः । ॐ व्योमकेशाय नमः । ॐ उग्रसहिताय नमः ।

ॐ षड्रसे मङ्गलसहिताय नमः । ॐ भवाय नमः । ॐ कृत्तिवाससे नमः ।

ॐ भवाय तोयान्नसहिताय नमः । ॐ भूतेशानमदनवासिनीसहिताय नमः ।

ॐ चन्द्रशेखराय नमः । ॐ सतीदेवीसहिताय नमः । ॐ सुभद्रासहिताय नमः ।

ॐ महेश्वराय नमः । ॐ स्वस्थानीदेवीसहिताय नमः । ॐ सर्वव्यापिन्यै नमः ।

इति पूजयेत् ।

## (छ) बलिपूजा

ॐ गणपतये नमः । ॐ वटुकाय नमः । ॐ योगिनीभ्यो नमः ।

ॐ असिताङ्गभैरवाय नमः । ॐ उन्मत्तभैरवाय नमः । ॐ कपालभैरवाय नमः ।

ॐ भीमभैरवाय नमः । ॐ स्वस्थानीक्षेत्रपालाय नमः । ॐ सर्वभूतेभ्यो नमः ।

ॐ त्रैलोक्यचिन्तामण्यै नमः । ॐ चण्डमुण्डप्रमथिन्यै नमः । ॐ जयायै नमः ।

ॐ अजितायै नमः । ॐ स्वस्थानीदेव्यै नमः । ॐ सदाशिवाय नमः ।

ॐ वशिष्ठादिसप्तर्षिभ्यो नमः । ॐ आदित्यादिनवग्रहेभ्यो नमः ।

ॐ मार्कण्डेयाद्यष्टचिरञ्जीविभ्यो नमः । ॐ विष्कुम्भादिसप्तविंशतियोगेभ्यो नमः ।

ॐ मेषादिद्वादशराशिभ्यो नमः । ॐ ब्रह्मणे नमः । ॐ गोमाब्राह्मण्यै नमः ।

ॐ शिवभट्टाय नमः । ॐ नवराजाय नमः । ॐ पापिन्यै नमः । इति

### (ज) अष्टमातृकापूजा (अष्टदिक्षु)

**ॐ ब्राह्म्यै नमः ।** **ॐ माहेश्वर्यै नमः ।** **ॐ कौमार्यै नमः ।**

**ॐ वैष्णव्यै नमः ।** **ॐ वाराह्यै नमः ।** **ॐ इन्द्राण्यै नमः ।**

**ॐ चामुण्डायै नमः ।** **ॐ महालक्ष्म्यै नमः ।** इत्यावाहनादिक्रमेण पूजयेत् ।

चन्दनम् –

**ॐ तँ यज्ञम्० ।**

**ॐ श्रीखण्डं चन्दनं दिव्यं सर्वारम्भसुमङ्गलम् ।**

**प्रियं हि सर्वदेवानां चन्दनं प्रतिगृह्यताम् ॥** चन्दनं सम०...

सिन्दूरादिसौभाग्यद्रव्यम् –

**ॐ उद्यदादित्यसङ्काशं स्त्रीणां सीमन्तभूषणम् ।**

**वीरालङ्करणं देवि सिन्दूरं प्रतिगृह्यताम् ।** सिन्दूरादिसौभाग्यद्रव्याणि सम०...

पुष्पाणि –

**ॐ यत्पुरुषम्० ।**

**ॐ उद्यानोद्भवपुष्पाणि मालत्यादीनि चेश्वरि ।**

**मया नीतानि पूजार्थं शङ्करि प्रतिगृह्यताम् ॥** पुष्पाणि सम०...

पुष्पमाला –

**ॐ उद्यानोद्भवपुष्पाणि सुगन्धीनि तथैव च ।**

**ग्रथितानि प्रतीच्छ त्वं स्वस्थानि परमेश्वरि ॥**

**कालोचितं यथा पुष्पं पञ्चवर्णं सुगन्धिभिः ।**

**विचित्रग्रथितं माल्यं गृहाण परमेश्वरि ॥** पुष्पमालां सम०....

कमलपुष्पाणि –

**ॐ पद्मं च सरसो जातं लक्ष्मीवासगृहं शुभम् ।**

**गृहाण जगदीशानि ! स्वस्थानि ! त्वं प्रसीद मे ॥** पद्मानि सम०...

बिल्वपत्राणि –

**ॐ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रिधायुधम् ।**

**त्रिजन्मपापसंहारं बिल्वपत्रं शिवार्पणम् ॥** बिल्वपत्राणि सम०...

दूर्वाक्षताः –

**ॐ दूर्वाक्षतं समानीतमष्टोत्तरशतं शुभम् ।**

**गृहाण परमेशानि भुक्तिमुक्तिफलप्रदे ॥** दूर्वाक्षतान् सम०...

सूत्राणि –

**ॐ नवतन्तुसमायुक्तं कार्पासं सूत्रमुत्तमम् ।**

**सर्वपापविनाशाय स्वस्थान्यै तन्निवेदये ॥** सूत्राणि सम०...

धूपम् –

**ॐ ब्राह्मणोऽस्य० ।**

**ॐ वनस्पतिरसोत्पन्नो नानागन्धेन संयुतः ।**

**आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥** धूपमाघ्रापयामि०...

दीपम् –

**ॐ चन्द्रमा मनसः०** ।

**ॐ आज्यं च वर्तिसंयुक्तं वह्निना योजितं मया** ।

**दीपं गृहाण देवेशि सर्वत्र तिमिरापहम्** ॥ दीपं दर्शयामि०...

नैवेद्यम् –

**ॐ नाभ्याऽआसीत्०** ।

**ॐ घृतपक्वं हविष्यान्नं पायसं च सशर्करम्** ।

**नानाविधञ्च नैवेद्यं गृह्यतां परमेश्वरि** ॥ नैवेद्यं सम०...

आचमनम् –

**ॐ यत्पुरुषेण०** ।

**ॐ उच्छिष्टोऽप्यशुचिर्वापि यस्य स्मरणमात्रतः** ।

**शुद्धिमाप्नोति तस्यै ते पुनराचमनीयकम्** ॥ आचमनीयं सम०...

ऋतुफलानि –

**ॐ इदं फलं मया देवि कदलीपनसादिकम्** ।

**इक्ष्वादियुक्तं सरसं गृह्यतां परमेश्वरि** ॥ ऋतुफलानि सम०...

ताम्बूलं पूगीफलञ्च –

**ॐ पूगीफलसमायुक्तं नागवल्लीदलैर्युतम्** ।

**कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम्** ॥ ताम्बूलं सम०...

ततः ॐ अक्षन्नमीमदन्तेति अष्टोत्तरशतं (१०८) अक्षतान् । ॐ श्रीश्चत इति अष्टोत्तरशतं (१०८) बेलीपुष्पाणि । ॐ नमः शम्भवायेति अष्टोत्तरशतं (१०८) यज्ञसूत्राणि । ॐ नाभ्याऽआसीदिति अष्टोत्तरशतं (१०८) नैवेद्यानि (मालपुवा/रोटी) । अष्टोत्तरशतं (१०८) ताम्बूलानि । अष्टोत्तरशतं (१०८) पूगीफलानि । अष्टोत्तरशतं (१०८) दक्षिणाः (भेटी) समर्प्य,

नीराजनम् –

अष्टोत्तरशतं (१०८) वर्तिकाभिर्नीराजनम्, कर्पूरदीपं च -

**ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्योज्योतिर्ज्योतिः सूर्यः स्वाहा । अग्निर्वर्चो ज्योतिर्वर्चः स्वाहा सूर्यो वर्चो ज्योतिर्वर्चः स्वाहा । ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥**

**ॐ आ रात्रि पार्थिवꣳरजः पितुरप्प्रायि धामभिः । दिवः सदाꣳसि बृहती वितिष्ठसऽआत्वेषं वर्तते तमः ॥**

**ॐ चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च ।**

**त्वमेव सर्वज्योतींषि तेन नीराजयाम्यहम् ॥** नीराजनं दर्शयामि०...

प्रदक्षिणा –

**ॐ सप्तास्यासन्०** ।

**ॐ यानि कानि च पापानि जन्मान्तरकृतानि च ।**

**तानि तानि प्रणश्यन्ति प्रदक्षिणपदे पदे ॥** प्रदक्षिणां सम०...

पुष्पाञ्जलिः –

**ॐ यज्ञेन यज्ञम्०** ।

**ॐ नमोऽस्तु ते महादेवि स्वस्थानि परमेश्वरि ।**

**त्रिलोकजननि नित्ये प्राणीनां पापहारिणि ॥**

**त्रिपुरघ्न महादेव भक्तवत्सल विश्वकृत् ।**

**नमस्करोमि देवेश ब्रह्ममाधववन्दित ॥**

**अन्यत्र शरणं नास्ति युवां वै शरणं मम ।**

**तस्मात्कारुण्यभावेन रक्षेतां परमेश्वरौ** ॥ मन्त्रपुष्पाञ्जलिं सम०...

नमस्कारः –

**ॐ नमस्तेऽस्तु जगन्मातः स्वस्थानि ! सर्वमङ्गले ।**

**तव प्रसादाद्देवेशि व्रतपूर्णं भवेन्मम** ॥ प्रार्थनापूर्वकं नमस्कारान् सम०...

विशेषार्घ्यम् -

**ॐ स्वस्थानि देवदेवेशि पूर्णार्थं मम तारकम् ।**

**गृहाणार्घ्यं मया दत्तं प्रसीद परमेश्वरि** ॥ इदमर्घ्यं सम०...

पूर्णपात्रम् –

हरिः ॐ तत्सदित्यादि ......गोत्रा ......देव्यहं श्रीस्वस्थानीदेवीप्रीतये दीपकलशगणेशपूजनपूर्वकं विहितस्य श्रीस्वस्थानीपूजनकर्मणः परिपूरणार्थमिदं पूर्णपात्रं प्रजापतिदैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

दक्षिणासङ्कल्पः –

हरिः ॐ तत्सदित्यादि पूर्वोच्चारितसङ्कल्पसिद्धिरस्तु ......गोत्रा ......देव्यहं श्रीस्वस्थानीव्रताङ्गत्वेन दीपकलशगणेशपूजनपूर्वकं कृतस्य श्रीस्वस्थानीव्रतपूजाकर्मणः साङ्गतासिद्ध्यर्थमिमां भूयसीदक्षिणां नानानामगोत्रेभ्यः शर्मभ्यो ब्राह्मणेभ्यः कन्याकुमारीभ्यो दीनानाथेभ्यश्च यथायोग्यभागं विभज्य दातुमहं जले उत्सृजे । तत्सत् न मम ।

ततो 'यान्तु देवेति' देवान् विसृज्य 'कायेन वाचेति' कर्मेश्वरार्पणं कृत्वा प्रसादादिकं गृह्णीयात् ।

॥ इति श्रीस्वस्थानीव्रतपूजाविधिः ॥

## शब्दार्थाः

बद्धाञ्जलिः = अँजुली बाँधेर ।

पिष्टातकम् = बास्ना आउने धुलो, अबिर ।

प्रणवः = ॐ कार ।

ऋतुफलम् = मौसम अनुसारको फल ।

यज्ञसूत्रम् = जनै ।

## अभ्यासः

**१. प्रदत्तशब्दानामर्थो विधेयः**

भूमावेव । बेलीपुष्पम् । ताम्बूलम् । तोयम् ।

**२. पाठ्यांशमनुसृत्य रिक्तस्थानं पूरयत**

(क) शुक्लाम्बरधरं ........................ ।

.................................शान्तये ॥

(ख) नमः कमलनाभाय........................ ।

......................................... भजे ॥

(ग) जगन्मातर्जगद्धात्रि ....................... ।

नमस्ते .................................. ॥

(घ) सुवर्णवर्णदीप्ताभां.......................... ।

....................... सर्वालङ्कार ........ ॥

(ङ) स्वस्थानि देवदेवेशि ......................... ।

.................................... परमेश्वरि ॥

३. **अधस्तनप्रश्नानामुत्तरं देयम्**

(क) अर्घ्यस्थापनप्रकारं निरूपयत ।

(ख) प्राणप्रतिष्ठामन्त्रं लिखत ।

(ग) श्रीस्वस्थानीदेव्याः पूजनविधिं संक्षेपेण प्रतिपादयत ।

(घ) अष्टमातृणां नामानि कानि ?

**प्रयोगात्मकः**

श्रीस्वस्थानीव्रतकथां पठित्वा कक्षायां श्रावयत ।

# १२ स्थानीयपूजा

## (क) छठपूजा

स्थानीयपूजायाम् अस्माकं तराईप्रदेशे विशेषतः छठपूजाऽभिधा स्थानीयपूजा प्रचलिता। तराईप्रदेशावासिन उपवासपूर्वकं छठपूजाव्रतमाचरन्ति। एतद्व्रतं केचन पुरुषा अपि कुर्वन्ति, परं बाहुल्येन नारीभिरनुष्ठीयते।

व्रतमिदं कार्तिकशुक्लचतुर्थीतः प्रारभ्यते। [२७] चतुर्थ्यां हविष्यं भुक्त्वा पञ्चम्यां (छठपरमेश्वरी) इति नाम्नाऽभिधाय पूजयन्ति। गोदुग्धे पाचितं शर्करायुतं पायसनैवेद्यमर्पयन्ति। ततः षष्ठयां तिथौ उपोष्य गोधूमपिष्ठेन (ठेकुवाऽभिद्यं) रोटिकाविशेषं नैवेद्यं पाचयन्ति। ततस्तत् ठकुवापञ्चकनैवेद्यं, इक्षुखण्डं, ताम्बुलपत्रं, कदल्यादिफलादिकं च (ढक्की) नाम्नि पात्रे सूर्पे वा स्थापयित्वा नद्यादौ गत्वा स्नानादिकं विधाय तत्रैव जले निमज्य पश्चिमाभिमुखो भूत्वा सायं सूर्यास्तमलवेलायां फलादिभिर्युक्तं तत् ढक्कीपात्रं (अर्घ्यम्) हस्ताभ्यां गृहीत्वा सूर्याय दर्शयन्ति। तत्रत्या जना एतदेव सूर्यार्घ्यदानमिति कथयन्ति। तत्पात्रं गृहमानीय तथैव स्थापयन्ति। व्रतिनस्तद्दिनेऽन्नजलादिकं किमपि न भक्षयन्ति। (उपवासं कुर्वन्ति)।

पुनः सप्तमीदिवसे प्रातः पूर्वदिनसंपादिते ठकीपात्रे (ठेकुवा) पञ्चकं पुनः प्रक्षिप्य पूर्वदिनवद् नदीं जलाशयं वा गत्वा स्नानं विधाय व्रती द्वयोरपि हस्तयोस्ताम्बुलपत्रं पूगीफलं च गृह्णाति। ततो यः कोऽपि अन्यो जनस्तदर्घामिधं ढक्कीपात्रं व्रती हस्तयोः स्थापयति। व्रतीनः च तत् ढक्कीपात्रं

---

२७. छठपूजाका केही विशेषताहरू-पञ्चमीका दिनमा (रवर्ना गर्ने) भन्दछन् र गाईको दुधमा सखर हालेर खिर पकाउँछन्। सखरबाहेक अरू गुलियो हाल्नुहुँदैन भन्दछन्। सोही दिन बेलुकी छठपरमेश्वरीको पूजा गरी सोही खिर केराका पातमा राखेर नैवेद्य चढाउँछन्। प्रसाद रूपमा सबैलाई दिन्छन्। तर त्यो प्रसाद खाने मानिसले त्यस दिन नुन खाएको हुनुहुँदैन भन्ने प्रचलन छ। व्रत गर्ने पुरुष या नारीले ज्यादै चोखोनितो गरी षष्ठिको दिन पुरै उपवास बस्नुपर्दछ। त्यस दिन ठकुवा नाम गरेको सखर हालेर घिउमा पकाएको एक प्रकारको नैवेद्य बनाउनुपर्दछ जुन एक प्रकारको गहुँको रोटी हो। यो नैवेद्य बनाउने गहुँ पिस्ने मेसिन, ओखल वा खल पनि धोइपखाली पवित्र पारेर पिस्नुपर्दछ। गहुँ पखालेपछि कुनै अपवित्र लुगा लगाएर र काग, कुकुर तथा चराचुरुङ्गी कसैलाई पनि छुन दिनु हुँदैन। ज्यादै चोखोनितो पुगेन, भएन भने कुनै न कुनै प्रकारको अशुभ लक्षण देखापर्ने गर्दछ। त्यसैले जुनसुकै काम गर्दा पनि पवित्रता अपनाउनु आवश्यक पर्दछ।

गृहीत्वा हस्तावुत्थाप्य सूर्याय दर्शयित्वा प्रणम्य गृहमागत्य व्रतं समापयन्ति । ढक्कीपात्रस्थितं फलादिकं ठेकुवा नैवेद्यं च प्रसादरूपेण ब्राह्मणेभ्यो बन्धुवर्गेभ्यश्च दत्वा स्वयमपि भक्षयन्ति ।

॥ इति ॥

## (ख) गौरा (गौरी) पर्व[२८]

### १. परिचयः

स्थानीयपर्वपूजामध्ये गोरा पर्व अपि एकं वर्तते। इदं पर्व नेपालदेशस्य कर्णालीक्षेत्रे महाकालीक्षेत्रे च प्रचलिता अस्ति। भारतस्य कुमाऊ-अल्मोडा-गढवालक्षेत्रेषु चेदं पर्व प्रचलितं लभ्यते। "शिवं पतिं कामयन्ती हिमालयपुत्री गौरी अनेन व्रतेन महेश्वरं पति प्राप" इति कथा स्कन्द पुराणान्तर्गत-हिमवत्खण्डादिषु उपलभ्यते। पतिपुत्रादेः सुख-समृद्धिदीर्घायुष्यादिकामनया सहस्रवर्षेभ्यः अस्य पर्वस्य अनुष्ठान- परम्परा प्रचलिता वर्तते । विशेषतः सर्वाभिः सौभाग्यवतीभिः सीमन्तिनीभिरस्यानुष्ठानं क्रियते ।

अस्मिन् पर्वणि विशेषतः गौरी महेश्वरयोः पूजनं कृत्वा गीतनृत्योत्सवं विधाय तद् विसर्जनं क्रियते। प्रथमवारं गोराव्रतं कुर्वन्त्यो महिलाः शुक्लपक्षे गोराव्रतं चरन्त्या नैकाकिन्या भाव्यमपितु न्यूनतम द्विसंख्यकाभिर्भाव्यमित्युच्यते ।

### २. कालः

सामान्यतः भाद्रशुक्लपक्षे अभुक्ताभरणोपेतायां सप्तम्यां अस्यानुष्ठानं प्रशस्यते । भाद्रशुक्ले अभुक्तभरणसप्तम्यां कदाचित् हरितालिका व्रतेनारभ्य ऋषिपञ्चमी (विरुडा-पञ्चमी) च सहैव अनुष्ठीयते ।

भाद्रशुक्ले, अभुक्ताभरणोपेतायां सप्तम्यां स्नानादि नित्यक्रियां समाप्य सिमन्तिनी-भिरिदमनुष्ठीयते । तत्र प्रायश्चित्तगोदानं, कर्म-सङ्कल्पः, ब्राह्मणवरणम्, पुण्याहवाचनम्, दीपकलशगणेशार्चनम् प्रधान-कलशे इशान कलशे वा स्थाल्यां अष्टदल मध्ये ॐ कारं विलिख्य तत्र पूगीफले प्रतिमायां, अक्षतापुञ्जे वा गौरी महेश्वरपूजा, अङ्गपूजा, धूपदीपान्ते विशेष नैवेद्य (विरुडा) निवेदनं, नीराजनम्, कर्पूरवर्तिदानम्, पूर्णपात्रदानम्,

२८. यो विवरण तयार गर्नमा अछामको वैद्यनाथ क्षेत्र विकास समितिका अध्यक्ष सूरतबहादुर शाहबाट र पूजा पद्धति टिपोटमा चटौत आर. डी. प्रभासको लेखबाट सहयोग लिइएको छ । पूजाविधि हरितालिकापूजा अनुसार गर्नुपर्छ ।

दक्षिणा-सङ्कल्प, गौरीमहेश्वरप्रार्थना, विसर्जनम् कर्मेश्वरार्पणम्, अशीर्वचः प्रसादग्रहणम्, ब्राह्मण-बन्धु-बान्धव-कन्याकुमारी भोजनदक्षिणादानञ्चेति कर्माणि यथा देशाचारं विधीयन्ते ।

## गौरा-पूजा

भाद्रशुक्ल पञ्चमीतः अष्टमीं यावत् पूजयित्वा अष्टम्याः सन्ध्याकालतः पूर्णिमापर्यन्तम् मनोरञ्जन-गीत-गान-पूर्वकं नृत्यं विधाय कौलोपासका वायुगुरु (धामी-झाँक्री) णां कम्पेन (कामेर) आशीर्वाददानं कुर्वन्ति । ततः प्रसाददानं ततो देवालये पिप्पलवृक्षे वा गत्वा गोरा मएसर विसर्जनं कुर्वन्ति । सुदूर पश्चिमाञ्चले (प्राचीन) डोटी प्रदेशे) गोरा पूजा प्रचलिता अस्ति । विशेषतः सुयोग्यः सुखदः पतिः सौभाग्यं सुखी परिवारः च अस्तु इति गौरा (पार्वती) देव्याः पूजां कुमार्य सुवासिन्यः (सौभाग्यवत्यः) च कुर्वन्ति । अत्र बालबालिका गृहपति-पुरुषाः अपि सहयोगं कुर्वन्ति । गौरी एव लोके गौरा इति अपभ्रंशरूपेण प्रचलिता । तत्र मएसर (महेश्वर) स्य अपि पूजा भवति । लोकोक्त्यनुसारं "गौरी अनेन व्रतेन महेश्वरं पतिं संप्राप्तवति" इति विस्वस्यते । लोककथानुसारं गौरी सामान्य-कृषक-मेषपालस्य पुत्री आसीत् । सा मेषान् चारयति स्म । महेश्वरश्च सामान्यकृषकस्य पुत्र आसीत् । स गां चारयति स्म । तत्रैव तयोः परिचय अभूत् । महेश्वरः गौरीं चकमे । गौर्या अहं महेश्वरं पतिं इच्छामि नान्यम् इति उक्तम् । तच्छ्रुत्वा मएसरः (महेश्वरः) गौरा (गौरी) संज्ञकां तां स्मारयन् मएसर आह-अहं महेश्वरः एव अस्मि - "इति स्वस्य महेश्वररूपं तत्र अदर्शयत् । ततः गौरी च स्वरूपं प्रदर्शयति । "मम मातुः पितुश्च अनुमतिं गृहीत्वा आवां विवाहं करिष्यावः" इति । मातृहृदयं सुकोमलं भवति । भिक्षुकं महेश्वरं सुन्दरीं स्वकन्यां दातुं माता न इच्छति । परं शिवेन प्रबोधिता सती मेनका भिक्षुकाय महेश्वराय स्वकन्यां गौरीं प्रायच्छत् । ततः कालान्तरेण निर्धना गौरा जीर्णकञ्चुकं शाटिकां च परिधाय वर्षर्तौ भोजनाच्छादनकामा मातृगृहं याचितुं गता । तत्र ज्येष्ठ भातृवधुः गौरां दृष्ट्वा नाभ्यनन्दत् । ततो गौरी कनीयसः भ्रातुः गृहं प्राप्ता । तत्र भ्रातृपत्नी तां स्वागत्तेनामभिनन्द्य तस्याः (गौर्याः) मनोरथानपूरयत् । तस्यै गौर्या शुभाशीः प्रदत्ता । तद् दृष्ट्वा ज्येष्ठभ्रातृपत्नी च पुनः गौरीमासाद्य स्वागतेनाभिनन्दन्ती गौरीं स्वगृहं नीत्वा तां यथोचितमर्पयत् । तेन प्रसन्नया गौर्या तस्यै अपि शुभाशीर्वादाः प्रदत्ताः । तदनु स्वपतिगृहं गत्वा गौरी महेश्वरौ सुखमन्वभूवन्" इति लोककथासारो वर्तते । ततः परं गौर्या कृतमिदं व्रतं "गौरा महेश्वर पूजा" व्रतं कालान्तरे

“गौरा मएसर पूजा नाम्ना प्रचलिता अभूदिति च श्रूयते ।” अद्यत्वे प्रचलिता पूजा पद्धतिस्तु लोके प्रचलितपूजापद्धत्या समाना एव ।

**पूजाक्रमः**

दीप-कलश-गणेशपूजा- पूर्विका पूजा तु प्रसिद्धा एव । इयं गोरापूजा-परम्परा नेपालराष्ट्रस्य सुदूरपश्चिमाञ्चले विशेषतः डोटी, डडेलधुरा, बैतडी, दार्चूला, कञ्चनपुर, कैलालीमण्डलेषु (जिल्लामा) अति प्रसिद्धा प्रचलिता च वर्तते । अत्र भगवत्या गौर्या निर्धन-कृषक-पुत्री-रूपेण भगवता महेश्वरेण च निर्धनकृषकपुत्ररूपेण “आदर्शपूर्णः प्रेमव्यवहारो विहित” इति शिक्षा कथासारेण प्रदीयते । सप्तम्यां सप्तग्रन्थिसूत्रधारणेन भूलोकादिसप्तलोकोत्तरप्राप्तिः चतुरसीतिग्रन्थि सूत्रधारणेन ८४ लक्षन्तः योनिषु चंक्रमणं नकर्तव्यमिति [२९] विश्वस्यते ।

॥ इति ॥

---

२९. इयं कथा लोकश्रुत्यनुसारं सुरगिरा – प्रा. ऋषिराम पोखरेलेन निबद्धा ।

# १३ दशदानविधिः

## (क) दशदानानां वस्तूनि

**गो-भू-तिल-हिरण्याऽऽज्य-वासो-धान्य-गुडानि च ।**

**रौप्यं लवणमित्याहुर्दशदानान्यनुक्रमात् ॥**

**यथैकशः**

१. गोदानम् । २. भूमिदानम् । ३. तिलदानम् । ४. हिरण्यदानम् ।

५. आज्यदानम् । ६. वस्त्रदानम् । ७. धान्यदानम् । ८. गुडदानम् ।

९. रजतदानम् । १०. लवणदानम्

## (ख) दशदानप्रयोगः

तत्रादौ प्रायश्चित्तगोदानम् -

तत्र प्रथमं ब्राह्मणानाहूय कर्ता (कर्ताऽशक्तश्चेत् पुत्रादिः) स्नानादिकं विधाय शुद्धासने उपविश्याचम्य कर्मपात्रं कृत्वा सर्वप्रायश्चित्तानुकल्पं गोदानं (गोनिष्क्रयद्रव्यं वा) कुर्यात् । गां गोनिष्क्रयद्रव्यं ब्राह्मणं च गन्धादिभिः सम्पूज्य हस्ते कुशयवजलतिलान्यादाय -

हरिः ॐ ३ तत्सत् ॐ विष्णुः ३ अद्येत्यादि देशकालौ सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/दासस्य मम (पितुः मातुर्वा) ज्ञाताज्ञातकामाकामादि- सकृदसकृत् कृतकायिकवाचिकमानसिकसांसर्गिकस्पृष्टापृष्टभुक्ताभुक्तपीतापीतसकलपातका-नुपातकोपपातकलघुपातकसङ्करीकरणमलिनीकरणापात्रीकरणजातिभ्रंशीकरणप्रकीर्णकादि-नानाविधपातकानां निरसनेन देहावसानकाले देहशुद्धिद्वारा श्रीमत्परमेश्वरप्रीत्यर्थम् इमां सर्वप्रायश्चित्तप्रत्याम्नायीभूतां यथाशक्त्यलङ्कृतां सवत्सां गां रुद्रदैवताम् (गोनिष्क्रयद्रव्यं

अमुकदैवतं वा) ......गोत्राय .......शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । ॐ तत्सन्न मम ॥

प्रार्थना –

**ॐ यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी ।**

**विश्वरूपधरो देवः प्रीयतामनया गवा ॥**

(**अस्या मूल्यप्रदानेन प्रीयतां विश्वरूपधृक् ॥**) गोनिष्क्रयद्रव्यदानपक्षे तु इति विशेषः ।

**प्रायश्चित्ते समुत्पन्ने निष्कृतिर्न कृता यदि ।**

**तस्य पापस्य शुद्धयर्थं धेनुमेतां ददामि ते ॥**

दानप्रतिष्ठा –

ॐ अद्य कृतैतत् सर्वप्रायश्चित्तप्रत्याम्नातगोदानकर्मणः (गोनिष्क्रयद्रव्यदानकर्मणः) प्रतिष्ठासिद्धयर्थं ...द्रव्यं ...दैवतं ...गोत्राय ...शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति पठित्वा दद्यात् ।

इति सर्वप्रायश्चित्तं कृत्वा दशदानानि दद्यात् ।

गोदानम् –

यथाशक्त्यलङ्कृतां गां (गोनिष्क्रयद्रव्यं वा) पुरतः स्थापयित्वा गन्धाक्षतादिभिर्गां ब्राह्मणं च सम्पूज्य कुशतिलजलादिकमादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) आजन्मोपार्जितसकल-दुरितोपशमनद्वारा श्रीमत्परमेश्वरप्रीतये दशदानान्तर्गतां इमां गां रुद्रदैवताम् (गोनिष्क्रयीभूतद्रव्यं वा) .....गोत्राय .....शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ यज्ञसाधनभूता या विश्वस्याघप्रणाशिनी ।**

**विश्वरूपधरो देवः प्रीयतामनया गवा ॥**

**(अस्या मूल्यप्रदानेन प्रीयतां मे जनार्दनः ॥)** मूल्यदानपक्षे तु इति विशेषः । अन्यत्समानम् ।

**गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दशः ।**

**तस्मादस्याः प्रदानेन प्रीयतां मे जनार्दनः ॥**

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य गोदानकर्मणः (गोनिष्क्रयदानकर्मणः) प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## भूमिदानम् –

देयभूमिसम्बन्धिमृत्पिण्डं (भूमिमूल्यं वा) पुरतो निधाय देयं ब्राह्मणं च गन्धादिभिः सम्पूज्य तिलकुशजलान्यादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) सर्वपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतां (अमुक) परिमितां बहुसस्यप्रदां भूमिं वराहदैवतां (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ सर्वभूताश्रया भूमिर्वराहेण समुद्धृता ।**

**अनन्तसस्यफलदा ह्यतः शान्तिं प्रयच्छ मे ॥**

**यतो भूमिप्रदानस्य कलां नार्हन्ति षोडशीम् ।**

**दानान्यन्यानि मे शान्तिर्भूमिदानाद् भवन्त्विह ॥**

**(दानान्यन्यानि मे शान्तिर्भूयाद् भूमूल्यदानतः ॥)** मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य भूमिदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## तिलदानम्

तिलान् (तन्मूल्यं वा) पुरतो निधाय देयं ब्राह्मणं च गन्धादिभिः सम्पूज्य कुशतिलजलान्यादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) आजन्मकृतैनसो निबर्हणद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतान् इमान् तिलान् प्रजापतिदैवतान् (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ महर्षेर्गोत्रसम्भूताः कश्यपस्य तिलाः स्मृताः।**

**तस्मादेषां प्रदानेन मम पापं व्यपोहतु॥**

(**एषां मूल्यप्रदानेन मम पापं व्यपोहतु॥**) मूल्यदानपक्षे तु इति विशेषः।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य तिलदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे। इति दद्यात्।

## हिरण्यदानम्

सुवर्णं (तन्मूल्यं द्रव्यं वा) पुरतः संस्थाप्य देयं ब्राह्मणं च गन्धादिभिः सम्पूज्य
कुशादिकमादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) आजन्मकृतैनो निबर्हणद्वारा श्रीमत्परमेश्वरप्रीतये दशदानान्तर्गतमिदं सुवर्णं वह्निदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः।**

**अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे॥**

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य सुवर्णदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## आज्यदानम्

आज्यं (तन्मूल्यं द्रव्यं वा) पुरतो निधाय देयं ब्राह्मणां च गन्धादिभिः सम्पूज्य
कुशतिलजलान्यादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) सकलपापक्षयपूर्वकं कल्पोक्तफलावाप्तये श्रीमत्परमेश्वरप्रीतये दशदानान्तर्गतमिदमाज्यं मृत्युञ्जयदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ कामधेनोः समुद्भूतं सर्वक्रतुषु संस्थितम् ।**

**देवानामाज्यमाहारस्ततः शान्तिं प्रयच्छ मे ॥**

**(देवानामाज्यमाहारो मूल्यदानात्सुखाय मे** ॥) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य आज्यदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## वस्त्रदानम्

वस्त्रं (तन्मूल्यद्रव्यं वा) पुरतो निधाय देयं ब्राह्मणं च गन्धादिना सम्पूज्य कुशादीन्यादाय-

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) समस्तपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतमिदं वस्त्रं बृहस्पतिदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ शीतवातातपत्राणं लज्जाया रक्षणं परम् ।**

**देहालङ्करणं वस्त्रमतः शान्ति प्रयच्छ मे ॥**

(**देहालङ्करणं वस्त्रं मूल्यदानात् सुखाय मे** ॥) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य वस्त्रदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## धान्यदानम्

धान्यं (तन्मूल्यद्रव्यं वा) पुरतो निधाय धान्यं देयब्राह्मणं च गन्धादिभिः सम्पूज्य कुशादिकमादाय-

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) समस्तपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतमिदं धान्यं प्रजापतिदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ सर्वदेवमयं धान्यं सर्वोत्पत्तिकरं महत् ।**

**प्राणिनां जीवनोपायमतः शान्तिं प्रयच्छ मे ॥**

**मूल्यदानपक्षे तु** –

(**प्राणिनां जीवनं मूल्यदानाच्छान्तिं प्रयच्छतु** ॥) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य धान्यदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## गुडदानम्

गुडं (तन्मूल्यं द्रव्यं वा) पुरतो निधाय गुडं ब्राह्मणं च गन्धादिना सम्पूज्य कुशादिकमादाय-

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) सकलपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतमिदं गुडं रसवर्यं सोमदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ यथा देवेषु विश्वात्मा प्रवरश्च जनार्दन ।**

**सामवेदस्तु वेदानां महादेवस्तु योगिनाम् ॥**

**प्रणवः सर्वमन्त्राणां नारीणां पार्वती यथा ।**

**तथा रसानां प्रवरः सदैवेक्षुरसो मतः ॥**

**मम तस्मात्परां शान्तिं ददस्व गुड सर्वदा ॥**

(**मूल्यदानादतः शान्तिं ददस्व गुड सर्वदा ॥**) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य गुडदानकर्मणः प्रतिष्ठासिद्धयर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## रजतदानम्

रजतं (तन्मूल्यं द्रव्यं वा) पुरतो निधाय देयं ब्राह्मणं च सम्पूज्य कुशादीन्यादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) सकलपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतमिदं रजतं चन्द्रदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ प्रीतिर्यतः पितॄणां च विष्णुशङ्करयोः सदा ।**

**शिवनेत्रोद्भवं रौप्यमतः शान्तिं प्रयच्छ मे ॥**

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य रजतदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## लवणदानम्

लवणं (तन्मूल्यं द्रव्यं वा) पुरतो निधाय देयं ब्राह्मणं च गन्धादिभिः सम्पूज्य कुशादिकमादाय -

हरिः ॐ तत्सदित्यादिकं सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/ दासस्य मम (पितुः मातुर्वा) सकलपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थं दशदानान्तर्गतमिदं लवणं सर्वरसोत्कृष्टं सोमदैवतं (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ यस्मादन्नरसाः सर्वे नोत्कृष्टा लवणं विना ।**

**शम्भोः प्रीतिकरं यस्मादतः शान्तिं प्रयच्छ मे ॥**

**(शम्भोः प्रीतिकरं मूल्यदानाच्छान्तिं प्रयच्छतु** ॥) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद्दशदानान्तर्गतस्य लवणदानकर्मणः प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

॥ इति दशदानविधिः ॥

# १४ पञ्चधेनुदानविधिः

## (क) ऋणधेनुदानम्

गां (गोनिष्क्रयद्रव्यं वा) पुरतो निधाय गां ब्राह्मणं च सम्पूज्य कुशतिलजलान्यादाय -

हरिः ॐ तत्सदित्यादि पूर्वसङ्कल्पमुच्चार्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/गुप्तस्य/दासस्य मम (पितुः मातुर्वा) ऐहिकामुष्मिकानेकजन्मार्जितदेवर्षिपितृमनुष्यादि-समस्तर्णपापक्षयद्वारा श्रीमत्परमेश्वरप्रीत्यर्थम् इमां ऋणापनोदधेनुं रुद्रदैवतां (तन्निष्क्रयं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ ऐहिकामुष्मिकं यच्च सप्तजन्मार्जितं त्वृणम्** ।

**तत्सर्वं शुद्धिमायातु गामेतां ददतो मम** ॥

(**तत्सर्वं शुद्धिमायातु गोमूल्यं ददतो मम** ॥) मूल्यदानपक्षे तु इति विशेषः। अन्यत्समानम्।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद् ऋणापनोदधेनुदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे। इति दद्यात्।

## (ख) पापापनोदधेनुदानम्

पूर्ववत् गां (गोनिष्क्रयद्रव्यं वा) पुरतो निधाय सम्पूज्य कुशजलान्यादाय -

ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/ गुप्तस्य/दासस्य मम (पितुः मातुर्वा) ज्ञाताज्ञातमनोवाक्कायकृतसकलपापक्षद्वारा श्रीमत्परमेश्वरप्रीत्यर्थम् इमां पापापनोदधेनुं रुद्रदैवतां (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ आजन्मोपार्जितं पापं मनोवाक्कायसम्भवम् ।**

**तत्सर्वं नाशमायातु गोप्रदानेन केशव ॥**

(**गोमूल्यदानात्तत्सर्वं नाशमायातु केशवः ॥**) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतत् पापापनोदधेनुदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## (ग) मोक्षधेनुदानम्

गां (गोनिष्क्रयद्रव्यं वा) पुरतो निधाय पूर्ववत् सम्पूज्य सङ्कल्पं कुर्यात् -

ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/ गुप्तस्य/दासस्य मम (पितुः मातुर्वा) समस्तपापक्षयपूर्वकं पापापहमहाविष्णुप्रीतये तत्प्रसादान्मोक्षप्राप्तये च इमां मोक्षधेनुं रुद्रदैवतां (तन्निष्क्रयं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे ।

प्रार्थना –

**ॐ मोक्षं देहि हृषीकेश मोक्षं देहि जनार्दन ।**

**मोक्षधेनुप्रदानेन मुकुन्दः प्रीयतां मम ॥**

(**मोक्षधेनोर्मूल्यदानान्मुकुन्दः प्रीयतां मम ॥**) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतन्मोक्षधेनुदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## (घ) वैतरणीधेनुदानम्

कृष्णां गां (गोनिष्क्रयं द्रव्यं वा) पुरतो निधाय गां ब्राह्मणं च गन्धादिभिः सम्पूज्य गां प्रार्थयेत्-

**ॐ धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ।**

**उत्तितीर्षुरहं देवि वैतरण्यै नमोऽस्तुते ॥**

ततो ब्राह्मणं प्रार्थयेत् -

**ॐ विष्णुरूप द्विजश्रेष्ठ भूदेव पङ्क्तिपावन ।**

**ततुं वैतरणीं कृष्णां गामेतां प्रददाम्यहम् ॥**

ततः कुशादिकमादाय गोपुच्छं गृहीत्वा -

ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/ गुप्तस्य/दासस्य मम (पितुः मातुर्वा) वैतरणीनदीसन्तरणार्थमिमां यथाशक्यलङ्कृतां गां रुद्रदैवतां (तन्निष्क्रयं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।**

**तां तर्तुकामो यच्छामि कृष्णां वैतरणीं तु गाम् ॥**

**या सा वैतरणी प्रोक्ता पूयशोणितवाहिनी ।**

**हेलया तर्तुकामस्तां कृष्णां गां विधिवद्ददे ॥**

मूल्यपक्षे तु– **ॐ यमद्वारे महाघोरे कृष्णा वैतरणी नदी ।**

**वैतरण्यास्तु गोमूल्यं तर्तुकामो ददामि ताम् ॥**

**भवसागरमग्नानां शोकतापोर्मिदुःखिनाम् ।**

**त्राता त्वं हि जगन्नाथ शरणागतवत्सल ॥**

दानप्रतिष्ठा –

ॐ अद्य कृतैतद् वैतरणीधेनुदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

## (ङ) उत्क्रान्तिधेनुदानम्

गां (तन्मूल्यं द्रव्यं वा) पुरतो निधाय देयब्राह्मणं च सम्पूज्य कुशादीन्यादाय -

ॐ अद्येहेत्यादि देशकालौ सङ्कीर्त्य (अमुक) गोत्रस्य (अमुक) शर्मणः/वर्मणः/ गुप्तस्य/दासस्य मम (पितुः मातुर्वा) सुखेन प्राणोत्क्रमणसिद्ध्यर्थम् इमां यथाशक्त्यलङ्कृताम् उत्क्रान्तिसंज्ञकां गां रुद्रदैवतां (तन्मूल्यं द्रव्यम् अमुकदैवतं वा) ......गोत्राय ...... शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे।

प्रार्थना –

**ॐ असूत्क्रान्तौ प्रवृत्तस्य सुखोत्क्रमणसिद्धये ।**

**तुभ्यमेनां सम्प्रददे धेनुमुत्क्रान्तिसंज्ञिकाम्** ॥

**(धेनोरुत्क्रान्तिसंज्ञाया मूल्यं तुभ्यं ददाम्यहम्** ॥) मूल्यदानपक्षे तु इति विशेषः ।

दानप्रतिष्ठा –

ॐ अद्य कृतैतद् उत्क्रान्तिसंज्ञकधेनुदानस्य प्रतिष्ठासिद्ध्यर्थमिदं द्रव्यं ......दैवतं ......गोत्राय ......शर्मणे ब्राह्मणाय दानप्रतिष्ठात्वेन तुभ्यमहं सम्प्रददे । इति दद्यात् ।

॥ इति पञ्चधेनुदानानि ॥

# १५ अष्टमहादानानि

आसन्नमरणस्य पापनाशनाय निर्णयसिन्धौ क्रियानिबन्धधृतगारूडे दानदिनकरोद्योते च अष्टौ महादानान्याज्ययुक्तानि । तानि यथा -

**तिला लोहं हिरण्यञ्च कार्पासं लवणन्तथा ।**

**सप्तधान्यं मही गावः प्रत्येकं पावनं स्मृतम् ॥**

## (क) तिलपात्रदानम्

**ताम्रपात्रं तिलैः पूर्णं प्रस्थमात्रं द्विजाय तु ।**

**सहिरण्यं तु यो दद्याच्छ्रद्धावित्ताऽनुसारतः ॥**

**सर्वपापविशुद्धात्मा लभते गतिमुत्तमाम् ॥** इति सिन्धौ ब्राह्मे च ।

यथाशक्ति ताम्रपात्रे तिलान् हिरण्यञ्च निधाय आतुरः कर्ता देयं ब्राह्मणञ्च सम्पूज्य सङ्कल्पं कुर्यात्-

**अद्येह देशकालादीन् सङ्कीर्त्य (अमुक) गोत्रः (अमुक) प्रवरः (अमुक) वेदाध्यायी (अमुक) नामाहं मम जन्मप्रभृतिमरणपर्यन्तकृतपापानां नाशार्थं सहिरण्यं तिलपात्रं हिरण्यमग्निदैवतं तिलान् प्रजापतिदैवतान् ताम्रपात्रं विश्वकर्मदेवताकम् (अमुक) गोत्राय (अमुक) शर्मणे ब्राह्मणाय तुभ्यमहं सम्प्रददे । तत्सन्न मम ।**

ततोऽञ्जलिं बद्ध्वा प्रार्थयेत् -

**ॐ तिलाः पुण्याः पवित्राश्च तिलाः सर्वकराः स्मृताः ।**

**शुक्ला वा यदि वा कृष्णा ऋषिगोत्रसमुद्भवाः ॥**

**यानि कानि च पापानि ब्रह्महत्यासमानि च ।**

**तिलपात्रप्रदानेन तानि नश्यन्तु सर्वदा ॥**

**महर्षेर्गोत्रसम्भूताः कश्यपस्य तिलाः स्मृताः ।**

**तस्मात्तेषां प्रदानेन मम पापं व्यपोहतु ॥**

दानप्रतिष्ठा -

**अद्येह जन्मप्रभृतिमरणपर्यन्तकृतपापानां नाशार्थं विहितस्य तिलपात्रदानकर्मणः साङ्गतासिद्ध्यर्थम् इदं दानप्रतिष्ठाद्रव्यं पूर्वोक्तगोत्राय ब्राह्मणाय दानप्रतिष्ठात्वेन सम्प्रददे ।**

एवं प्रकारेण अन्येषां दानवाक्यक्यानि संयोजयेत् ।

॥ इति ॥

## दशदानको सामग्री

गाई, जग्गा, तिल, सुन, घिउ, वस्त्र, धान, सखर वा मिठा चाकु, चाँदी, नुन अथवा यी सबैको मूल्य ।

सामान्य पूजासामग्री भाग १ । कर्मपात्र । फूल । कुश । दशदानका वस्तु हाल्ने पात्रहरू अथवा बोहोता टपरी । १० जना ब्राह्मण इत्यादि ।

## शब्दार्थाः

| | | |
|---|---|---|
| लवणम् | = | नुन । |
| निष्क्रयः | = | बराबरको मूल्य । |
| गौः | = | गाई । |
| भूः | = | जग्गा । |
| आज्यम् | = | घिउ । |
| गुडः | = | चाकु, सखर । |
| रजतम् | = | चाँदी । |
| हिरण्यम् | = | सुन । |
| वासः | = | लुगा, वस्त्र । |
| धान्यम् | = | धान अन्न । |
| रौप्यम् | = | चाँदी । |
| तिलः | = | तिल । |

# अभ्यासः

**१. परस्परं मेलयत**

| | |
|---|---|
| गौः | बृहस्पतिदैवतम् |
| भूमिः | सोमदैवतम् |
| तिलम् | वह्निदैवतम् |
| हिरण्यम् | प्रजापतिदैवतम् |
| आज्यम् | चन्द्रदैवतम् |
| वासः | मृत्युञ्जयदैवतम् |
| गुडम् | रुद्रदैवतम् |
| रजतम् | वराहदैवतम् |
| | ब्रह्मदैवतम् |

२. **रिक्तस्थानं पूरयत**

(क) शीतवातातपत्राणं ....................... ।

.........................................मे ॥

(ख) प्रीतिर्यतः.......................... ।

.................................. मे ॥

(ग) मोक्षं देहि ......................... ।

मोक्षधेनु................................. ॥

३. **अधस्तनप्रश्नानामुत्तरं देयम्**

(क) दशदानवस्तूनि कानि ? यथाक्रमं लेखनीयानि ।

(ख) तिलदानस्य सङ्कल्पवाक्यं रचयत ।

(ग) वस्त्रदानस्य दानप्रतिष्ठावाक्यं लिखत ।

(घ) लवणदानानन्तरं केन वाक्येन प्रार्थ्यते ?

(ङ) पञ्चधेनूनां नामानि यथाग्रन्थं लेखनीयानि ।

(छ) अष्टमहादानानां नामानि कानि ?

# १६ दाहसंस्कारो दशगात्रविधिश्च

## (क) चितानिर्माणम्

मृतं पुत्रादयो बान्धवादयश्च यमसूक्तं (शुक्लयजुर्वेदसंहितायाः पञ्चत्रिंशत्तम-(३५) अध्यायात्मकम्) जपन्तोऽन्तर्यामिणं रामं वा कीर्तयन्तो नूतनवस्त्रावृतं शवं दाहदेशं श्मशानभूमिं वा नयेयुः। अन्येऽपि वृद्धपुरस्सराः प्रेतमनुगच्छेयुः। तत्र जलसमीपे शुद्धभूमौ, उत्तरशिरसं स्थापयेयुः। पुत्रादिकस्य कक्षोपस्थशिखावर्जं केशनखलोमानां वपनं कार्यम्। अन्ये बान्धवाश्च केशनखानि वापयेयुः। कर्त्रतिरिक्तानां दशमेऽह्नि वपनं यथाचारम्। भर्तरि मृते पत्न्या आद्येऽह्नि दशमेऽह्नि वा सर्वान् केशान् समुद्धृत्य नखच्छेदनमात्रं वपनं वा यथाचारम्।

ततः स्नात्वा नूतनवस्त्रं परिधाय कृमिकेशादिनिचयरहितायां शुद्धभूमौ चितां कारयेत्। तत्रादौ भूमिं संशोध्य सम्प्रार्थ्य श्रीखण्डागरुचन्दनदेवदारुबिल्वतुलसीकाष्ठैः यथामिलितदारुभिर्वा चितां निर्माय तस्योपरि कुशानास्तीर्य तत्र कर्पूरनिचयं च दद्यात्।

## (ख) शवसंस्कारः

ततः प्रेतं च पुनः संस्नाप्य नूतनवस्त्रं परिधाप्य गोपीचन्दनश्रीखण्डकुङ्कुमादिभिः सर्वाङ्गं विलिप्य यथाचारं यज्ञोपवीतपुष्पमालातुलसीमालादिभिश्चालङ्कृत्य नूतनपट्टवस्त्रेण पादतलवर्जं शिरःप्रभृत्यङ्गुलिपर्यन्तं प्रेतमाच्छादयेत्।

## (ग) चितायां शवस्थापनम्

यथाविधि निर्मितायां चितायां दक्षिणाशिरसमुत्तानदेहं प्रेतं स्थापयेत्।[३०]

---

३०. यद्यपि चितामा शवलाई राखेर जलाउने क्रममा- "अधोमुखो दक्षिणा दिक् चरणस्तु पुमानिति। सगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः॥ उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः॥" अर्थात् ब्रह्मपुराणको यस वचनअनुसार पुरुषलाई उत्तरतिर शिर गराई घोप्टो पारेर चितामा राख्ने र नारीलाई उत्तानो पारेर राख्ने यस्तो क्रम देखिन्छ। हाम्रा प्रचलित पद्धतिहरूमा पनि यस्तै क्रम पाइन्छ, तापनि- "तत्रोत्ताने निपात्यैनं दक्षिणाशिरसं मुखे" छन्दोगपरिशिष्टमा कात्यायनको वचन यस्तो भएकाले कात्यायनका अनुयायी हामी सबैले चितामा शव राख्दा दक्षिणतिर शिर गराई उत्तानो पारेर नै राख्नुपर्दछ। वीरमित्रोदय शुद्धप्रकाशमा पनि यही क्रम पाइन्छ।

## (घ) शवस्य वक्षस्थलेऽन्नद्रव्यस्थापनम्

ततः शवस्य मुखे सुवर्णं दत्वा नूतनश्वेतवस्त्रखण्डे तण्डुलाद्यन्नं रूप्यकादिद्रव्यं च निधाय शवस्य वक्षस्थले स्थापयेत् ।

## (ङ) अग्निदानम् [३१]

ततः शवस्य कर्ताऽऽचम्याऽग्निं संस्कृत्य **क्रव्यादाग्नये नमः** इति गन्धादिभिः सम्पूज्य कृतापसव्यो दक्षिणाभिमुखो दक्षिणहस्तेऽग्निं वामहस्ते सप्तसमिधं गृहीत्वा -

**कृत्वा सुदुष्करं कर्म जानता वाप्यजानता ।**

**मृत्युकालवशं प्राप्तं नरं पञ्चत्वमागतम् ॥**

**धर्माधर्मसमायुक्तं लोभमोहसमावृतम् ।**

**दहेयं सर्वगात्राणि दिव्याँल्लोकान् स गच्छतु ॥**

इति मन्त्रं पठित्वा चितां शीघ्रं त्रिः प्रदक्षिणीकृत्य शिरोदेशेऽग्निं दद्यात् ।[३२] ततः सव्येन

---

३१. दागबत्ती ।

३२. **अथ पञ्चकमरणे दाहविधिः-** (पञ्चकमा मरेकाहरूको तल दिइएको विधि गरेर मात्र दाह गर्नुपर्दछ)

(पञ्चकमृतस्य तु दर्भमयीः पञ्च प्रतिमाः कृत्वोर्णासूत्रेण वेष्टयित्वा जलयुतयवपिष्टेनानुलिप्य हस्ते कुशतिलजलान्यादाय-अद्येत्यादि देशकालौ स्मृत्वा अमुकगोत्रस्यामुकप्रेतस्य पञ्चकमरणजनितवंशानिष्टपरिहारार्थं पञ्चकविधिं करिष्ये । इति सङ्कल्प्य १. प्रेतवाहाय नमः । २. प्रेतसखाय नमः । ३. प्रेतपाय नमः । ४. प्रेतभूमिपाय नम । ५. प्रेतहर्त्रे नमः । इति नामभिस्ताः प्रतिमाः प्रेतवाहाद्यावाहनपूर्वकं गन्धादिभिः सम्पूज्य दाहसमये प्रथमां प्रेतवाहप्रतिमां प्रेतस्य शिरसि, द्वितीयां प्रेतसखप्रतिमां नेत्रयोः, तृतीयां प्रेतपप्रतिमां वामकुक्षौ, चतुर्थीं प्रेतभूमिपप्रतिमां नाभौ, पञ्चमीं प्रेतहर्तृप्रतिमां पादयोर्निधाय पूर्वोक्तैरिव स्वाहान्तैर्नाममन्त्रैः क्रमेण पञ्च घृताहुतीर्हुत्वा "यमाय सोमं मधुमत्तयेषां ते नो गावः समवदन्तु हव्या । दूतं वो देवः स्वदयं सुमेषा ते नो रासतमुरुगायमद्य, यूयं यातः स्वस्तिभिः सदा नः ॥" त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयमामृतात् ॥ इति मन्त्राभ्यां प्रतिमासु प्रत्येकं घृताहुतिर्जुहुयात् । तत उदकधारां च दत्वा तदनन्तरमग्निं दद्यात् । इति पञ्चकमरणे दाहविधिविशेषः ।

**सूतिकामरणे विशेषः–**

सूतिकायां मृतायां कुम्भे उदकं कृत्वा तत्र पञ्चगव्यं प्रक्षिप्य "आपो हिष्ठा, इदमापः" इत्यादिभिः पुण्यर्भिरभिमन्त्य ब्राह्मणानुज्ञया पञ्चदश प्राजापत्यान् हुत्वा तेन कुम्भोदकेन शतकृत्वस्तां स्नापयित्वा वस्त्रान्तरेण सर्वां वेष्टयित्वा दाहः कार्यः । रजस्वलामरणेऽप्येवम् । उदक्या सूतकी वा यं स्पृशति तस्याप्येष एव विधिः ।

दक्षिणामुख घृतधारामेकां दद्यात् । स्त्रीदाहेऽप्यविकृत एव मन्त्रः पठनीयः पुंस्त्वाविवक्षणात् । नग्नो न दग्धव्यः । दग्धशेषं किञ्चित्त्यजेत् । "निःशेषस्तु न दग्धव्यः " इति वचनात् ।

### (च) अर्धहोमः

ततोऽर्धे दग्धे आचम्य कृतापसव्यो घृताक्तं समिधं जुहुयादनेन मन्त्रेण -

**अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः । असौ स्वर्गाय लोकाय स्वाहा ज्वलतु पावकः ॥**

### (छ) अस्थिप्रक्षेपः

एवं शरीरं दाहयित्वा कपोतावशेषं शरीरं ज्ञात्वाऽवशिष्टभागमादाय नूतनवस्त्रेणावेष्ट्य **क्रव्यादाय नमः**[३३] इति मन्त्रेण जले प्रक्षिपेत् ।

ततः पुत्रादयः सर्वे वामहस्तस्यानामिकया "अप नः शोशुचदघम्" इति मन्त्रेणोदकमपनोद्य (अप्रदक्षिण्येनावर्त्य) तूष्णीं निमज्जेयुः ।

ततः "असावेतत्त उदकम्" इति पारस्करवचनात् (असौ इत्यस्य स्थाने प्रेतस्य प्रथमान्तनामग्रहणम्) अपसव्येनैव कुशतिलजलान्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते चितादाहजनिततापतृडुपशमाय एष तिलकुशतोयाञ्जलिर्मद्दत्तस्तवोपतिष्ठताम्** । इत्युक्त्वा भूमौ सकृदुदकं सर्वे प्रक्षिपेयुः ।

### (ज) चितापिण्डदानम्

ततश्चितां प्रक्षाल्य स्नानं विधाय पयसा सहितेन यवपिष्टेन तण्डुलेन वा षट् पिण्डान्निर्मायापसव्येन दक्षिणाभिमुखः पातितवामजानुः कुशतिलजलान्यादाय -

---

३३. अन्त्यकर्मदीपके धर्माय नमः इति ।

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते प्रथमपिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । एवं द्वितीयपिण्डस्थाने तृतीयपिण्डस्थाने इति क्रमेण षट् पिण्डासनानि दद्यात् ।

ततः कुशतिलजलसहितम् एकैकं पिण्डमादाय षट् पिण्डान् दद्यात् -

**१. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते मृत्युस्थाने शव नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

**२. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते चत्वरस्थाने पान्थ नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

**३. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते चतुष्पथस्थाने खेचर नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

**४. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते विश्रामस्थाने भूत नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

**५. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते काष्ठसञ्चयनस्थाने प्रेत नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

**६. अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते चितास्थाने साधक नाम एषः पिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

ततः प्रत्येकं प्रत्यवनेजनं दद्यात् -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इदं प्रथमपिण्डप्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्** ।

एवमेव द्वितीयादिपञ्चपिण्डेषु क्रमेण प्रत्यवनेजनं दद्यात् ।

### (झ) उदकदानम्

ततः प्रेतदाहानन्तरं सर्वे शवस्पृशाः शवानुगमनकर्तारश्च चितामवलोकयन्तः **अहरहर्नीयमानो**

**गामश्वं पुरुषं पशुम्। वैवस्वतो न तृप्येत सुराया इव दुर्मतिः** ॥ इति यमगाथां गायन्तो बालपुरःसराः स्त्रियश्चाग्रे कृत्वा नदीजलाशयान्तरं पङ्क्तिक्रमेण गच्छेयुः। ततः श्यालकमन्यं ब्राह्मणं वा **उदकं करिष्यामहे** इत्युदकं प्रार्थयेयुः। ततः **कुरुध्वम्** इति प्रत्युक्तिः। तत्र यदि शतवर्षान्न्यूनः प्रेतस्तदा **कुरुध्वं मा चैवं पुनः** इति प्रतिवचनम्। ततः कृतापसव्या दक्षिणाभिमुखा एकवस्त्रधरा **अप नः शोशुचदघम्** इति जले प्रविश्य वामकरस्यानामिकया (अपनोद्य) दक्षिणतो जलं नीत्वा तूष्णीं निमज्जेयुः। अङ्गञ्च न निघर्षेयुः। (कर्कादि भाष्यकाराणां मतेऽपनोदे मन्त्रः। देवयाज्ञिकमते निमज्जने।)

ततो द्विवासा आचम्य कृतापसव्या दक्षिणाभिमुखाः हस्ते कुशजलतिलान् गृहीत्वा -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एष तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठताम्**।

इत्युक्त्वा प्रेताय भूमौ एकैकमञ्जलिं सर्वेऽपि दद्युः। एवं तिलतोयाञ्जलिः सपिण्डैर्विषमदिने सगोत्रैश्च प्रत्यहं दशदिनपर्यन्तं देयः।

॥ इति दाहसंस्कारः ॥

## (ञ) दशगात्रविधिः

तत्र प्रथमदिनकृत्यम् -

अथ कर्ता जलाशयसमीपे शुद्धां भूमिं दक्षिणाप्रवणां सम्पाद्य तत्र दक्षिणाप्रवणां वेदीं निर्माय गोमयेनोपलिप्य सर्वां पिण्डदानसामग्रीं सम्पाद्य अपसव्यं कृत्वा दक्षिणाभिमुखो भूत्वा हस्ते कुशतिलजलान्यादाय कर्म कुर्यात्।

अथ प्रयोगः–

कर्ता कुशहस्तः सोत्तरीयः गौरसर्षपान् विकीर्य दीपं प्रज्वाल्याऽऽचम्य कृतापसव्यो दक्षिणाभिमुखः पातितवामजानुर्वेदिकायां दक्षिणाग्रान् कुशानास्तीर्य कुशतिलजलान्यादाय प्रतिज्ञासङ्कल्पं कुर्यात् -

**अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः रौरवनामनरकोत्तारणाय मूर्धावयवसम्भूत्यै प्रथमदिननिमित्तकं पूरकपिण्डदानमहं करिष्ये**।

पुनः कुशतिलजलान्यादाय, आस्तृतकुशोपरि पितृतीर्थेनावनेजनं दद्यात् -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते प्रथमदिनसम्बन्धि-प्रथमपिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्।**

ततस्तिलघृतमधुयुतं पिण्डं कुशतिलजलसहितमादाय, अवनेजनोपरि पिण्डं दद्यात् -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते रौरवनामनरकोत्तारणाय प्रथमदिनसम्बन्धी एषः शिरःपूरकः प्रथमपिण्डस्ते मया दीयते तवोपतिष्ठताम्।**

ततः कुशतिलजलान्यादाय पिण्डोपरि प्रत्यवनेजनं दद्यात् -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपतिष्ठताम्।**

ततः पिण्डपूजनम् -

प्रेतमुद्दिश्य तूष्णीमेवोशीरचन्दनोर्णासूत्रभृङ्गिराजपूगीफलपुष्पाक्षतधूपदीपनैवेद्यैः पिण्डमभ्यर्च्य कुशतिलजलान्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते प्रथमदिनसम्बन्धि-प्रथमपिण्डे एतानि पिण्डस्थोशीरचन्दनोर्णासूत्रभृङ्गिराजपूगीफलपुष्पाक्षतधूपदीपैक्षवादिनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्।** इत्युत्सृजेत्।

ततस्तिलतोयाञ्जलिमेकं पिण्डोपरि दद्यात् -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एषस्तिलतोयाञ्जलिस्ते मया दीयते तवोपतिष्ठताम्।**

ततः सतिलतोयपूर्णपुटपात्रमादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इदं सतिलतोयपूर्णपात्रं ते मया दीयते तवोपतिष्ठताम्।** इति पिण्डसमीपे उत्सृजेत्। (द्वितीयादिदिनेषु प्रतिदिनमेकैकं वर्धयित्वेदमेव जलदानं वर्धमानजलिदानत्वेन च क्वचिद् व्यवह्रियते।)

ततस्त्रिकाष्ठिकास्थितयोः पुटपात्रयोर्नीरक्षीरञ्चादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इमे त्रिकाष्ठिकास्थिते नीरक्षीरयुतपुटपात्रे ते मया दीयेते तवोपतिष्ठेताम्।** इत्युत्सृज्य पठेत् -

**श्मशानानलदग्धोऽसि परित्यक्तोऽसि बान्धवैः।**

**इदं नीरमिदं क्षीरमत्र स्नाहि इदं पिब॥**

ततः सुशीतलजलपूर्णघटमग्रे कृत्वा -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एषः सतिलसुशीतलजलोपेतो घटस्ते मया दीयते तपोपतिष्ठताम्।** इत्युत्सृज्य पठेत् -

**सुशीतलजलोपेतः सर्वोपस्करसंयुतः।**

**एष घटो मया दत्तः प्रेताय उपतिष्ठताम्॥**

ततः सव्येनाञ्जलिं बध्वा पठेत् -

**अनादिनिधनो देवः शङ्खचक्रगदाधरः।**

**अक्षयः पुण्डरीकाक्ष प्रेतमोक्षप्रदो भव॥**

ततस्तिलजलसहितां लौहदक्षिणामादाय -

**अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः कृतैतच्छिरःपूरकप्रथमपिण्डदान-प्रतिष्ठार्थमिदं लौहं पलपरिमितं दक्षिणात्वेन दातुमहमुत्सृजे।** इत्युत्सृज्य तत्सर्वं जले क्षिपेत्। तदनन्तरम् आचारप्राप्तं स्नानं कुर्यात्। अनेनैव प्रकारेण दश पिण्डा देयाः।

ततः प्रथमदिनादेव दशदिनपर्यन्तं पिप्पलवृक्षे जलपूर्णघटमधश्छिद्रं कृत्वा शिक्ये धारयेत्।

कुशतिलजलान्यादाय -

**अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः पापशान्त्यध्वश्रमविनाशार्थम् इदम् आकाशाधिकरणकजलम् अद्यादिदशरात्रं यावत् ते मया दीयते तवोपतिष्ठताम्**। इत्युत्सृजेत्। एवं दशदिनपर्यन्तं प्रत्यहं कुर्यात्।

कर्ता भोजनसमये पुटकादौ सघृतमन्नं कृत्वा अपसव्येन हस्ते जलं गृहीत्वा काकबलिं दद्यादनेन मन्त्रेण -

**काकोऽसि यमदूतोऽसि गृहाण बलिमुत्तमम्।**

**यमद्वारे महाघोरे त्वमाप्यायितुमर्हसि॥**

**यमाय धर्मराजाय मृत्यवे चान्तकाय च।**

**दक्षिणां दिशमाश्रित्य प्रेतान्नं बलिमाहर॥**

सव्यं कृत्वा लवणादिभिन्नं घृतशर्करार्द्रकसहितमन्नं स्वयं भुञ्जीत।

सायङ्कालिकं कर्म –

सायङ्काले कर्तृशयनस्थानसमीपे सप्तधान्योपरि जलपूर्णघटं संस्थाप्य तदुपरि तिलतैलेन घृतेन वा दशदिनपर्यन्तमहर्निशं दीपं प्रज्वालयेत् -

**अन्धकारो महाघोरो रविर्यत्र न भासते।**

**तस्य सन्तरणार्थाय दीपं दद्याद्दशाह्निकम्॥** इति वचनात्

ततो दक्षिणाभिमुखाऽपसव्यं कृत्वा कुशतिलजलान्यादाय -

**अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः यमदुर्गमार्गमहाघोरान्धतमः-सन्तरणार्थम् अद्यादिदशदिनपर्यन्तम् अहर्निशं सप्तधान्योपरिस्थापितजलपूर्णघटोपरि एष दीपस्ते मया दीयते तवोपतिष्ठताम्**। इत्युत्सृजेत्।

ततः सायङ्काले गोमयोपलिप्ते प्राङ्गणे त्रिकाष्ठिकोपरि पुटकादौ दीपं, पानीयं, पुष्पं संस्थाप्य आशौचान्तं यावत् प्रत्यहं दद्यात् । तत्रापसव्येन तिलकुशजलान्यादाय एकैकं स्पृष्ट्वा -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एष दीपस्ते मया दीयते तवोपतिष्ठताम्** ।

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इदं पानीयं ते मया दीयते तवोपतिष्ठताम्** ।

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते इदं पुष्पं ते मया दीयते तवोपतिष्ठताम्** ।

**अनेन पश्य** । **इदं पिब** । **इदं परिधेहि** । इति वदेत् ।

॥ इति प्रथमदिनकृत्यम् ॥

द्वितीयादिदिनकृत्यानि –

एवं द्वितीयादिदिनेष्वपि प्रथमदिनकृत्यस्थानमागत्य प्रथमदिनवत् स्नानादिदक्षिणादानान्तं सकलकृत्यं कुर्यात् । तत्र द्वितीयादिदिनेषु विशेषवाक्यानि यथा -

द्वितीयदिने –

प्रतिज्ञासङ्कल्पः– **अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः जातिपुष्करनाम-नरकोत्तारणाय कर्णाक्षिनासिकावयवसम्भूत्यै द्वितीयदिननिमित्तकं पूरकपिण्डदानमहं करिष्ये** ।

पिण्डदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते जातिपुष्करनामनरकोत्तारणाय द्वितीयदिनसम्बन्धी एषः कर्णाक्षिनासिकापूरकः द्वितीयपिण्डस्ते मया दीयते तवोपतिष्ठताम्** ।

तिलतोयाञ्जलिदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एतौ सतिलतोयाञ्जली ते मया दीयेते तवोपतिष्ठेताम्** । इति द्वावञ्जली पिण्डोपरि दद्यात् ।

सतिलतोयपूर्णपुटपात्रदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एते सतिलतोयपूर्णपुटपात्रे ते मया दीयेते तवोपतिष्ठेताम्** । इति द्वे तिलतोयपूर्णपुटपात्रे पिण्डसमीपे उत्सृजेत् । अन्यत्सर्वं प्रथमदिनवत् ।

तृतीयदिने –

प्रतिज्ञासङ्कल्पः– **अद्येह (अमुक)गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः हाहाकारनाम-नरकोत्तारणाय गलांसभुजवक्षःसम्भूत्यै तृतीयदिननिमित्तकं पूरकपिण्डदानमहं करिष्ये ।**

पिण्डदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते हाहाकारनामनरकोत्तारणाय तृतीयदिनसम्बन्धी एषः गलांसभुजवक्षःपूरकस्तृतीयपिण्डस्ते मया दीयते तवोपतिष्ठताम् ।**

तिलतोयाञ्जलिदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एते सतिलतोयाञ्जलयस्ते मया दीयन्ते तवोपतिष्ठन्ताम् ।** इति त्रीन् सतिलतोयाञ्जलीन् पिण्डोपरि दद्यात् ।

सतिलतोयपूर्णपुटपात्रदानसङ्ल्पः– **अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते एतानि सतिलतोयपूर्णपुटपात्राणि ते मया दीयन्ते तवोपतिष्ठन्ताम् ।** इति त्रीणि तिलतोयपूर्णपुटपात्राणि पिण्डसमीपे उत्सृजेत् । अन्यत्सर्वं प्रथमदिनवत् ।

चतुर्थदिने –

तामिस्रनामरनरकोत्तारणाय नाभिलिङ्गगुदपूरकश्चतुर्थपिण्डः । चत्वारः सतिलतोयाञ्जलयः । चत्वारि सतिलतोयपूर्णपुटपात्राणि । तिलतोयाञ्जलीनां तिलतोयपात्राणाञ्च तृतीयदिनवच्चतुर्थदिनादावपि वाक्यमेलनम् । अन्यत्सर्वं प्रथमदिनवत् ।

पञ्चमदिने –

अन्धतामिस्रनामनरकोत्तारणाय जानुजङ्घापादपूरकः पञ्चमः पिण्डः । पञ्च तिलतोयाञ्जलयः । पञ्च तिलतोयपुटपात्राणि । अन्यत्सर्वं पूर्ववत् ।

षष्ठदिने –

जातिसंस्रवनामनरकोत्तारणाय सर्वमर्मपूरकः षष्ठः पिण्डः । षट् तिलतोयाञ्जलयः । षट् तिलतोयपूर्णपुटपात्राणि । अन्यत्सर्वं पूर्ववत् ।

सप्तमदिने –

अमेध्यकृमिनामनरकोत्तारणाय सर्वनाडीपूरकः सप्तमः पिण्डः । सप्त तिलतोयाञ्जलयः । सप्त तिलतोयपूर्णपुटपात्राणि । अन्यत्सर्वं पूर्ववत् ।

अष्टमदिने –

पुरीषभक्षनामनरकोत्तारणाय दन्तलोमादिपूरकोऽष्टमः पिण्डः । अष्टौ तिलतोयाञ्जलयः । अष्टौ तिलतोयपूर्णपुटपात्राणि । अन्यत्सर्वं पूर्ववत् ।

नवमदिने –

स्वमांसभक्षनामनरकोत्तारणाय वीर्यपूरको नवमः पिण्डः । नव तिलतोयाञ्जलयः । नव तिलतोयपूर्णपुटपात्राणि । **नवमे वाससां त्यागः** इत्युक्तत्वात् तस्मिन् दिने वासःप्रक्षालनञ्च कर्तुर्दशमे दिने वा । अन्यत्सर्वं पूर्ववत् ।

दशमदिने –

कुम्भीपाकनामनरकोत्तारणाय पूर्णतातृप्तताक्षुद्विपर्ययहेतुको दशमः पिण्डः । दश तिलतोयाञ्जलयः । दश तिलतोयपूर्णपुटपात्राणि । एवं संहत्य पञ्चाशत् तिलतोयाञ्जलयस्तावन्ति तिलतोयपूर्णपुटपात्राणि, तैः सहेति ब्राह्मपुराणवचनात् ।

दशमेऽहनि पिण्डं समाप्य अरण्यं गत्वा कृतश्मश्रुकर्मणः स्पृष्टान्युत्सृज्य तिलकल्कगौरसर्षपैः शिरः स्नात्वा अहतवासा शुक्लवाससो वा गोहिरण्यादीनालभ्य प्रविशेरन् ।[३४] अस्मिन् दिने ब्राह्मणानां पञ्चगव्यप्राशनमिति ॥

॥ इति दशगात्रविधिः ॥

३४. दशमदिने प्रातर्गृहलेपनपूर्वकं धातुपात्राणि भस्मादिना संशोध्य प्रथमदिनस्थापितदीपं च सहैवादाय बालवृद्धपुरःसरं जलाशयं गत्वा स्नानं विधाय पाकं निर्वर्त्य पिण्डदानादिकं नित्यवत् सर्वं समाप्य स्वर्णरौप्यमयकुद्दालेन प्रथमदिनकृतां वेदीं कुम्भादिमृन्मयपात्राणि च सर्वं सम्भेद्य पृष्टान्युत्सृज्य सपिण्डैः सह मुण्डनं कृत्वा स्नात्वा शुद्धे वाससी नूतनं यज्ञोपवीतं च धारयित्वा पूर्वधृतवाससी समाश्रितेभ्यो दत्वा गां हिरण्यादिकं चालभ्य पञ्चगव्यं प्राश्य गृहं गच्छेत् ।

## (ट) अस्थिसञ्चयनश्राद्धविधिः [३५]

कर्ता स्नानं विधाय श्राद्धभूमिं सर्षपैस्तिलैश्चावकीर्य रक्षादीपं संस्थाप्य सकलदेयानि वस्तून्यासाद्याचम्य पूर्वाभिमुख उपविश्य कर्मपात्रं कृत्वा श्राद्धीयद्रव्याणि आत्मानञ्च सिञ्चेत् -

**अपवित्रः पवित्रो वा सर्वावस्थाङ्गतोऽपि वा ।**

**यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥**

**ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु । ॐ पुण्डरीकाक्षः पुनातु ।**

ततः कुशतिलजलान्यादाय प्रतिज्ञासङ्कल्पं कुर्यात् -

**अद्येत्यादि देशकालौ स्मृत्वा (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया अस्थिसञ्चयननिमित्तकश्राद्धम् एकोद्दिष्टविधिनाऽहं करिष्ये ।**

ततः '**देवताभ्यः पितृभ्यश्च**' इति त्रिः पठेत् । अपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः कुशादीन्यादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया अस्थिसञ्चयननिमित्तकश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम्** । इति कुशरूपमासनं दद्यात् ।

ततः पुटके प्रादेशमात्रं कुशपत्रद्वयात्मकं पवित्रं '**पवित्रेस्थो वैष्णव्यौ**' इति मन्त्रेण दक्षिणाग्रं धृत्वा शन्नोदेवीरिति जलं, तिलोसीति तिलान्, गन्धद्वारामिति गन्धम्, श्रीश्चतेति पुष्पं क्षिपेत् ।

---

३५. कुर्यात् तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च । पञ्चमे वैश्यजातेस्तु शूद्रस्य दशमेऽहनि ॥
अस्थिनां सञ्चयः प्रेतं क्रियते देशगौरवात् । इति ब्राह्मे
द्वितीयेऽप्यस्थिसञ्चय इति क्वचित् ॥

चतुर्थदिवसेऽस्थिसञ्चयनं कुर्यात् । तेषां गङ्गाम्भसि प्रक्षेप इति । व्यवस्था च सूत्रानुसारेण वा ज्ञातव्या । इति विष्णुः
तथा-
त्र्यहाशौचे द्वितीयेऽह्नि कर्तव्यस्त्वस्थिसञ्चयः । सद्यः शौचे तत्क्षणं च कर्तव्य इति निश्चयः ॥
कर्तव्यं तु नरैः श्राद्धं देशकालाऽविरोधतः ॥
तच्चास्थिसञ्चयनात्पूर्वं सञ्चयनानन्तरं वा सिद्धान्नेन आमान्नेन वा कृत्वा यवचूर्णेन पिण्डः कर्तव्यः ।

ततस्तदर्घ्यपात्रं वामहस्ते कृत्वा सपुष्पं पवित्रमन्नपात्रोपरि **'नमो नारायणाय'** इति मन्त्रेण उत्तराग्रं धृत्वा **'या दिव्या आपः'** इति अर्घ्यपात्रस्थजलमभिमन्त्र्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयननिमित्तकश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्** । इति अर्घ्यजलं पवित्रोपरि उत्सृजेत् । पवित्रसहितमर्घ्यपात्रम् आसनस्य वामपार्श्वे **'प्रेताय स्थानमसि'** इति उत्तानमेव स्थापयेत् ।

ततो गन्धादिभिरभ्यर्च्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयनश्राद्धे एतानि गन्धपुष्पाक्षतधूप-दीप-नैवेद्य-पूगीफल-वासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इति गन्धादिकमुत्सृजेत् ।

ततश्चतुष्कोणमण्डलं विधाय श्राद्धीयान्नाग्रभागं घृततिलमधुजलयुतमादाय - **इदमन्नं सजलमेतद् भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत् ।

अथान्नसङ्कल्पः- सोपस्करं तिलघृतमधुजलयुतमन्नमुपनीय मधुनाभिघार्य पात्रालम्भनाऽवगाहनं विना **पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा । इदं विष्णुर्विचक्रमे०** इति पठित्वा **अपहताऽसुरा रक्षाᳬंसि वेदिषदः** इति अन्नोपरि तिलान् विकीर्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्राय/गोत्रायै (अमुक)प्रेताय/प्रेतायै अस्थिसञ्चयनश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्** । इत्युत्सृजेत् ।

ततः सव्येन **मधुवातेति** ऋचां पाठः ।

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत्** ।

**तत्सर्वमच्छिद्रमस्तु श्रीभास्करस्य प्रसादतः** ॥

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे** ।

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः** ॥

इति पठित्वा अपसव्येनान्नपात्रसमीपे पिण्डदानार्थं मृत्पिण्डिकां विधाय तत्र रेखोल्मुकभ्रामणं विना छिन्नमूलकुशानास्तीर्य कुशजलान्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयनश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इत्यास्तृतकुशोपरि उत्सृजेत् ।

ततो घृतमधुतिलयुक्तेनान्नेन पिण्डं निर्माय जलतिलकुशसहितं पिण्डमादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयनश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इत्यवनेजनोपरि पिण्डं दद्यात् । आस्तृतकुशमूलेन करं प्रोक्ष्य पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।

सव्येनाऽऽचम्यापसव्यं कृत्वा तूष्णीं भास्वरमूर्तिं प्रेतं चिन्तयेत् । ततः कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयनश्राद्धे इदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपष्ठिताम्** । इति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्येनाऽऽचम्य अपसव्यं कृत्वा वामहस्तेन सूत्रमादाय कराभ्यां गृहीत्वा **प्रेतैतत्ते वासः** इति पिण्डोपरि सूत्रं धृत्वा गन्धपुष्पादिना पिण्डं सम्पूज्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते अस्थिसञ्चयनश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षतधूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत् ।

ततः **शिवा आपः सन्तु** इति जलम् । **सौमनस्यमस्तु** इति पुष्पम् । **अक्षतञ्चारिष्टमस्तु** इति तण्डुलान् अन्नपात्रोपरि क्षिपेत् । तदनन्तरं कुशादीन्यादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया अस्थिसञ्चयनश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्** । इत्यक्षय्योदकं दत्त्वा सव्यं कृत्वा दक्षिणां दिशं पश्यन् **अघोरः प्रेतोस्तु** इति पूर्वाग्रां जलधारां दद्यात् ।

ततोऽपसव्यं कृत्वा सपवित्रान् कुशानास्तीर्य पुटकस्थजलादिना **इदमूर्जं ते मया दीयते तवोपतिष्ठताम्** इति पिण्डोपरि दक्षिणाग्रां पयोधारां दद्यात् । ततः पिण्डमाघ्रायोत्थापयेत् ।

छिन्नमूलकुशानग्नौ क्षिपेत् । अर्घपात्रं सञ्चाल्य सव्येन दक्षिणाद्रव्यमादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया अस्थिसञ्चयनश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं तन्निष्क्रयं द्रव्यं वा यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे ।** इति दक्षिणां दद्यात् ।

अपसव्यं कृत्वा दीपमाच्छाद्य सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य पठेत् -

**प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च ।**

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥**

इति पठित्वा विष्णुस्मरणम् । श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् । स्त्रिया अपि सर्वं पुरुषैकोद्दिष्टवद्भवति ।

॥ इत्यस्थिसञ्चयनश्राद्धविधिः ॥

## (ठ) पाथेयश्राद्धविधिः

कर्ता स्नानं विधाय श्राद्धभूमिं सर्षपैस्तिलैश्चावकीर्य रक्षादीपं संस्थाप्य श्राद्धवस्तूनि समासाद्याचम्य पूर्वाभिमुख उपविश्य कर्मपात्रं कृत्वा अपवित्रः पवित्रो वेति श्राद्धीयद्रव्याणि आत्मानञ्च सिञ्चेत्। तत्कुशजलान्यादाय प्रतिज्ञासङ्कल्पं कुर्यात् -

**अद्येत्यादि देशकालौ स्मृत्वा (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया मनुष्यलोकात् प्रेतलोकगमनार्थं पाथेयश्राद्धमेकोद्दिष्टविधिनाऽहं करिष्ये ।**

ततः **'देवताभ्यः पितृभ्यश्च'** इति त्रिः पठेत् । अपसव्यं कृत्वा दक्षिणाभिमुखः पातितवामजानुः कुशादीन्यादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेतायाः पाथेयश्राद्धे इदमासनं ते मया दीयते तवोपतिष्ठताम् ।** इति कुशरूपमासनं दद्यात् ।

ततः पुटके प्रादेशमात्रं कुशपत्रद्वयात्मकं पवित्रं **'पवित्रेस्थो वैष्णव्यौ'** इति मन्त्रेण दक्षिणाग्रं धृत्वा शन्नोदेवीरिति जलं, तिलोसीति तिलान्, गन्धद्वारामिति गन्धम्, श्रीश्चतेति पुष्पं क्षिपेत् । ततस्तदर्घ्यपात्रं वामहस्ते कृत्वा सपुष्पं पवित्रमन्नपात्रोपरि **'नमो नारायणाय'** इति मन्त्रेण उत्तराग्रं धृत्वा **'या दिव्या आपः'** इति अर्घ्यपात्रस्थजलमभिमन्त्र्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धे एष हस्तार्घस्ते मया दीयते तवोपतिष्ठताम्।** इति पवित्रोपरि अर्घ्यजलमुत्सृजेत् । पवित्रसहितमर्घ्यपात्रम् आसनस्य वामपार्श्वे **'प्रेताय स्थानमसि'** इति उत्तानमेव स्थापयेत् ।

ततोऽभ्यर्च्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धे एतानि गन्धपुष्पाक्षतधूप-दीप-नैवेद्य-पूगीफल-वासांसि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इति गन्धादिकमुत्सृजेत् ।

ततश्चतुष्कोणमण्डलं विधाय श्राद्धीयान्नाग्रभागं घृततिलमधुजलयुतमादाय - **इदमन्नं सजलमेतद् भूस्वामिपितृभ्यो नमः** । इत्युत्सृजेत् ।

अथान्नसङ्कल्पः- सोपस्करं तिलघृतमधुजलयुतमन्नमुपनीय मधुनाभिघार्य पात्रालम्भनाऽवगाहनं विना **पृथिवि ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा । इदं विष्णुर्विचक्रमे....सुरे** इति पठित्वा **अपहताऽसुरा रक्षाꣳसि वेदिषदः** इति अन्नोपरि तिलान् विकीर्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्राय/गोत्रायै (अमुक)प्रेताय/प्रेतायै पाथेयश्राद्धे इदमन्नं सोपस्करं ते मया दीयते तवोपतिष्ठताम्** । इत्युत्सृजेत् ।

ततः सव्येन **मधुवातेति** ऋचां पाठः ।

**अन्नहीनं क्रियाहीनं विधिहीनं च यद्भवेत् ।**

**तत्सर्वमच्छिद्रमस्तु श्रीभास्करस्य प्रसादतः ॥**

**नमस्तुभ्यं विरूपाक्ष नमस्तेऽनेकचक्षुषे ।**

**नमः पिनाकहस्ताय वज्रहस्ताय वै नमः** ॥ इति

अत्र विकिरनिषेधः । अपसव्येनान्नपात्रसमीपे पिण्डदानार्थं पिण्डिकां निर्माय तत्र रेखोल्मुकभ्रामणं विना छिन्नमूलकुशानास्तीर्य कुशजलान्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धे पिण्डस्थाने इदमवनेजनं ते मया दीयते तवोपतिष्ठताम्** । इत्यास्तृतकुशोपरि उत्सृजेत् ।

ततो घृतमधुतिलयुक्तेनान्नेन पिण्डं निर्माय जलतिलकुशसहितं पिण्डमादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धे एष पिण्डस्ते मया दीयते तवोपतिष्ठताम्** । इत्यवनेजनोपरि पिण्डं दद्यात् । आस्तृतकुशमूलेन करं प्रोक्ष्य पिण्डशेषान्नं पिण्डसमीपे विकिरेत् ।

सव्येनाऽऽचम्यापसव्यं कृत्वा तूष्णीं भास्वरमूर्तिं प्रेतं चिन्तयेत् । ततः कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धे इदं पिण्डप्रत्यवनेजनं ते मया दीयते तवोपष्ठिताम्** । इति पिण्डोपरि प्रत्यवनेजनं दद्यात् । ततो नीवीं विस्रंस्य सव्येनाऽऽचम्य अपसव्यं कृत्वा वामहस्तेन सूत्रमादाय कराभ्यां गृहीत्वा **प्रेतैतत्ते वासः** इति पिण्डोपरि सूत्रं धृत्वा गन्धपुष्पादिना पिण्डं सम्पूज्य कुशादीन्यादाय -

**अद्येह (अमुक)गोत्र/गोत्रे (अमुक)प्रेत/प्रेते पाथेयश्राद्धपिण्डे एतानि सूत्रगन्धपुष्पाक्षत-धूपदीपनैवेद्यानि ते मया दीयन्ते तवोपतिष्ठन्ताम्** । इत्युत्सृजेत् ।

ततः **शिवा आपः सन्तु** इति जलम् । **सौमनस्यमस्तु** इति पुष्पम् । **अक्षतञ्चारिष्टमस्तु** इति तण्डुलान् अन्नपात्रोपरि क्षिपेत् । तदनन्तरं कुशादीन्यादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया पाथेयश्राद्धे दत्तैतदन्नपानादिकमुपतिष्ठताम्** । इत्यक्षय्योदकं दत्त्वा सव्यं कृत्वा दक्षिणां दिशं पश्यन् **अघोरः प्रेतोस्तु** इति पूर्वाग्रां जलधारां दद्यात् ।

ततोऽपसव्यं कृत्वा सपवित्रान् कुशानास्तीर्य पुटकस्थजलादिना **इदमूर्जं ते मया दीयते तवोपतिष्ठताम्** इति पिण्डोपरि दक्षिणाग्रां पयोधारां दद्यात् । ततः पिण्डमाघ्रायोत्थापयेत् । छिन्नमूलकुशानग्नौ क्षिपेत् । अर्घपात्रं सञ्चाल्य सव्येन दक्षिणाद्रव्यमादाय -

**अद्येह (अमुक) गोत्रस्य/गोत्रायाः (अमुक)प्रेतस्य/प्रेताया मनुष्यलोकात् प्रेतलोकगमनार्थं पाथेयश्राद्धप्रतिष्ठार्थमिदं रजतं चन्द्रदैवतं तन्निष्क्रयं द्रव्यं वा यथानामगोत्राय यथानामशर्मणे ब्राह्मणाय दक्षिणां दातुमहमुत्सृजे** । इति दक्षिणां दद्यात् ।

अपसव्यं कृत्वा दीपमाच्छाद्य सव्येन हस्तौ पादौ प्रक्षाल्याऽऽचम्य पठेत् -

**प्रमादात् कुर्वतां कर्म प्रच्यवेताध्वरेषु च** ।

**स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः** ॥

इति पठित्वा विष्णुस्मरणम् । श्राद्धीयवस्तूनि ब्राह्मणाय प्रतिपादयेत् जले वा क्षिपेत् । स्त्रिया अपि सर्वं पुरुषैकोद्दिष्टवद्भवति ।

॥ इति पाथेयश्राद्धविधिः ॥

## दाहसंस्कारका लागि आवश्यक सामग्री

शवलाई फेराउने धोती, जनै, चन्दन, फूल, अबिर, माला, लावा, पीताम्बर, चिता बनाउने दाउरा, श्रीखण्ड, तुलसीको डाँठ, कपूर, घिउ । मुखमा हालिदिने- पञ्चरत्न वा सुन । छातीमा राखिदिने- चामल, रुपियाँ, पैसा, वस्त्र । चितामा पिण्ड दिन- गाईको दुध, चामल, तिल, कुश इत्यादि । पञ्चकमरण भएमा- कुशको प्रतिमा (मान्छेको आकार)- ५, जौको पीठो, भेडाको ऊन, मासका दाना ।

## शब्दार्थाः

| | | |
|---|---|---|
| शवः | = | लास । |
| चिता | = | मान्छे पोल्नका निमित्त सात तला बनाई दाउरा सजाएर राखिएको। |
| शिरःप्रभृति | = | शिरदेखि लिएर । |
| अग्निदानम् | = | दागबत्ती दिनु । |
| अस्थिप्रक्षेपः | = | अस्तु सेलाउनु । |
| कपोतावशेषः | = | परेवाजत्रो बाँकी रहेको । |
| शवानुगमनकर्तारः | = | मलामीहरू । |
| द्विवासा | = | धोती र उपर्ना लाएर । |
| दशगात्रम् | = | दशक्रिया । |
| त्रिकाष्ठिका | = | पैयूँका तीनओटा काठलाई बाँधेर बनाएको त्रिकाठी । |
| अहर्निशम् | = | दिनरात । |

## अभ्यासः

१. **परस्परं मेलयत**

| | |
|---|---|
| (क) प्रथमदिनम् | अमेध्यकृमि |
| द्वितीयदिनम् | पुरीषभक्षम् |
| तृतीयदिनम् | अन्धतामिस्रम् |
| चतुर्थदिनम् | जातिसंस्रवम् |
| पञ्चमदिनम् | रौरवम् |
| षष्ठदिनम् | जातिपुष्करम् |
| सप्तमदिनम् | तामिस्रम् |
| अष्टमदिनम् | हाहाकारम् |
| नवमदिनम् | घोरान्धकारम् |
| दशमदिनम् | स्वमांसभक्षम् |
| | कुम्भीपाकम् |

| | |
|---|---|
| (ख) मृत्युस्थाने | पान्थः |
| चत्वरस्थाने | शवः |
| चतुष्पथस्थाने | साधकः |
| विश्रामस्थाने | प्रेतः |
| काष्ठसञ्चयनस्थाने | निशाचरः |
| चितास्थाने | खेचरः |
| | भूतः |

**२. अधस्तनप्रश्नान् समाधत्त**

(क) शवस्य श्मशाने नयनप्रकारं वर्णयत ।

(ख) चितायां शवस्थापने कोऽपि विशेषविधिरस्ति चेत् विविच्य वर्णयत ।

(ग) अर्घहोमस्येतिकर्तव्यता वर्णनीया ।

(घ) चितापिण्डदानविधिं ग्रन्थाधारेण सर्वं लिखत ।

(ङ) उदकदानविधिं प्रयोगानुसारेण प्रदर्शयत् ।

(च) काकबलिदानमन्त्रः कः ?

(छ) अष्टमदिनस्य विशेषवाक्यं प्रदर्शयत ।

(ज) अस्थिसञ्चयनश्राद्धस्येतिकर्तव्यता संक्षेपेण वर्णनीया ।

(झ) पाथेयश्राद्धकालं निर्दिश्य विशेषकार्याणि निरूपणीयानि ।